नाभावे कर्तव्ये कृते च मुभावो नासिद्धः । अमुना । अमूभ्याम् ३ । अमीभिः । अमुष्मै । अमीभ्यः २ । अमुष्मात् । अमुष्य । अमुयोः २ । अमीषाम् । अमुष्मिन् । अमीषु ॥

*इति हलन्त पुंल्लिङ्गाः ॥*

# अथ हलन्तस्त्रीलिङ्गाः

### ३६१. नहो धः ॥ ८।२।३४

नहो हस्य धः स्याज्झलि पदान्ते च ॥

### ३६२. नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥ ६।३।११६

क्विबन्तेषु पूर्वपदस्य दीर्घः । उपानत्, उपानद् । उपानहौ । उपानत्सु ॥ क्विन्नन्तत्वात् कुत्वेन घः । उष्णिक्, उष्णिग् । उष्णिहौ । उष्णिग्भ्याम् ॥ द्यौः । दिवौ । दिवः । द्युभ्याम् ॥ गीः । गिरौ । गिरः ॥ एवं पूः ॥ चतस्रः । चतसृणाम् ॥ का । के । काः । सर्वावत् ॥

### ३६३. यः सौ ॥ ७।२।११०

इदमो दस्य यः इयम् । त्यदाद्यत्वम् । पररूपत्वम् । टाप् । दश्चेति मः । इमे । इमाः । इमाम् । अनया । हलि लोपः । आभ्याम् । आभिः । अस्यै । अस्याः । अनयोः । आसाम् । अस्याम् । आसु ॥ त्यदाद्यत्वम् । टाप् । स्या । त्ये । त्याः ॥ एवं तद्, एतद् ॥ वाक्, वाग् । वाचौ । वाग्भ्याम् । वाक्षु ॥ अप्शब्दो नित्यं बहुवचनान्तः । अप्तृन्निति दीर्घः । आपः । अपः ॥

## ३६४. अपो भि ॥ ७।४।४८

अपस्तकारो भादौ प्रत्यये । अद्भिः । अद्भ्यः । अद्भ्यः । अपाम् । अप्सु ॥ दिक्, दिश् । दिशौ । दिशः । दिग्भ्याम् ॥ त्यदादिष्विति दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक्, दृग् । दृशौ । दृग्भ्याम् ॥ त्विट्, त्विड् । त्विषौ । त्विड्भ्याम् ॥ ससजुषो रुरिति रुत्वम् । सजूः । सजुषौ । सजूर्भ्याम् ॥ आशीः । आशिषौ । आशीर्भ्याम् ॥ असौ । उत्वमत्वे । अमू । अमूः । अमुया । अमूभ्याम् ३ । अमूभिः । अमुष्यै । अमूभ्यः २ । अमुष्याः । अमुयोः २ । अमूषाम् । अमुष्याम् । अमूषु ॥

*इति हलन्तस्त्रीलिङ्गाः ।*

# अथ हलन्तनपुंसकलिङ्गाः

स्वमोर्लुक् । दत्वम् । स्वनडुत्, स्वनडुद् । स्वनडुही । चतुरनडुहोरित्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् ॥ वाः । वारी । वारि । वार्भ्याम् ॥ चत्वारि ॥ किम् । के । कानि ॥ इदम् । इमे । इमानि ॥ (***अन्वादेशे नपुंसके वा एनद्वक्तव्यः***) । एनत् । एने । एनानि । एनेन । एनयोः ॥ अहः । विभाषा ङिश्योः । अह्नी, अहनी । अहानि ॥

## ३६५. अहन् ॥ ८।२।८६

अहन्नित्यस्य रुः पदान्ते । अहोभ्याम् ॥ दण्डि । दण्डिनी । दण्डीनि । दण्डिना । दण्डिभ्याम् ॥ सुपथि । टेर्लोपः । सुपथी । सुपन्थानि ॥ ऊर्क्, ऊर्ग । ऊर्जी । ऊर्न्जि । नरजानां संयोगः । तत् । ते । तानि ॥ यत् । ये । यानि ॥ एतत् । एते । एतानि ॥ गवाक्, गवाग् । गोची । गवाञ्चि । पुनस्तद्वत् । गोचा । गवाग्भ्याम् ॥ शकृत् । शकृती । शकृन्ति ॥ ददत् ॥

## ३६६. वा नपुंसकस्य ॥ ७।१।७९

अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य वा नुम् सर्वनामस्थाने । ददन्ति, ददति ॥ तुदत् ॥

## ३६७. आच्छीनद्योर्नुम् ॥ ७।१।८०

अवर्णान्तादङ्गात्परो यः शतुरवयस्तदन्तस्य नुम् वा शीनद्योः । तुदन्ती, तुदती । तुदन्ति ॥

## ३६८. शप्श्यनोर्नित्यम् ॥ ७।१।८१

शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् शीनद्योः । पचन्ती । पचन्ति । दीव्यत् । दीव्यन्ती । दीव्यन्ति ॥ धनुः । धनुषी । सान्तेति दीर्घः । नुम्विसर्जनीयेति षः । धनुषि । धनुषा । धनुर्भ्याम् । एवं चक्षुर्हविरादयः ॥ पयः । पयसी । पयांसि । पयसा । पयाभ्याम् ॥ सुपुम् । सुपुंसी । सुपुमांसि ॥ अदः । विभक्तिकार्यम् । उत्वमत्वे । अमू । अमूनि । शेषं पुंवत् ॥ ,

*इति हलन्तनपुंसकलिङ्गाः ।*

*इति षड्लिङ्गप्रकरणम् ।*

# अथाव्ययानि

## ३६९. स्वरादिनिपातमव्ययम् ॥ १।१।३७

स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः । स्वर् । अन्तर् । प्रातर् । पुनर् । सनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋधक् । ऋते । युगपत् । आरात् । पृथक् । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । समया । निकषा । स्वयम् । वृथा । नक्तम् । नञ् । हेतौ । इद्धा । अद्धा । सामि । वत् । ब्राह्मणवत् । क्षत्रियवत् ॥ सना । सनत् । सनात् । उपधा । तिरस् । अन्तरा । अन्तरेण । ज्योक् । कम् । षम् । सहसा । विना । नाना । स्वस्ति । स्वधा । अलम् । वषट् । श्रौषट् । वौषट् । अन्यत् । अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रवाहुकम्, प्रवाहिका । आर्यहलम् । अभीक्ष्णम् । साकम् । सार्धम् । नमस् । हिरुक् । धिक् । अथ । अम् । आम् । प्रताम् । प्रशान् । प्रतान् । मा । माङ् । आकृतिगणोऽयम् ॥

च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । युगपत् । भूयस् । कूपत् । कुवित् । नेत् । चेत् । चण् । कच्चित् । यत्र । नह । हन्त । माकिः । माकिम् । नकिः । नकिम् । माङ् । नञ् । यावत् । तावत् । त्वे

। द्वै । त्वै । रै । श्रौषट् । वौषट् । स्वाहा । स्वधा । वषट् । तुम् । तथाहि । खलु । किल । अथो । अथ । सुष्ठु । स्म । आदह । (***उपसर्गविभक्तिस्वरप्रतिरूपकाश्च***)/ अवदत्तम् । अहंयुः । अस्तिक्षीरा । अ । आ । इ । ई । उ । ऊ । ए । ऐ । ओ । औ । पशु । शुकम् । यथाकथाच । पाट् । प्याट् । अङ्ग । है । हे । भोः । अये । द्य । विषु । एकपदे । युत् । आतः । चादिरप्याकृतिगणः ॥

तसिलादयः प्राक् पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । अम् । आम् । कृत्वोर्थाः । तसिवती । नानाञौ । एतदन्तमप्यव्ययम् ॥

## ३७०. कृन्मेजन्तः ॥ १।१।३९

कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । स्मारं स्मारम् । जीवसे । पिबध्यै ॥

## ३७१. क्त्वातोसुन्कसुनः ॥ १।१।४०

एतदन्तमव्ययम् । कृत्वा । उदेतोः । विसृपः ॥

## ३७२. अव्ययीभावश्च ॥ १।१।४१

अधिहरि ॥

## ३७३. अव्ययादाप्सुपः ॥ २।४।८२

अव्ययाद्विहितस्यापः सुपश्च लुक् । तत्र शालायाम् ॥

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।&न्ब्स्प्ंवचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥

वगाहः, अवगाहः । पिधानम्, अपिधानम् ॥

*इत्यव्ययानि ॥*

# अथ तिङन्ते भ्वादयः

लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, लृङ् । एषु पञ्चमो लकारश्छन्दोमात्रगोचरः ॥

## ३७४. लः कर्मणि च भावे चाकर्मकेभ्यः ॥ ३।४।६९

लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च ॥

## ३७५. वर्तमाने लट् ॥ ३।२।१२३

वर्तमान क्रिया वृत्तेर्धातोर्लट् स्यात् । अटावितौ । उच्चारण सामर्थ्याल्लस्य नेत्वम् । **भू** सत्तायाम् ॥ १ ॥ कर्तृ विवक्षायां भू ल् इति स्थिते --- .

**३७६. तिप्तस्झिसिप्थस्थमिब्वस्मस्ताताञ्झथासाथाम्ध्वमिड्वहिमहिङ् ॥ ३।४।७८**

एतेऽष्टादश लादेशाः स्युः ॥

**३७७. लः परस्मैपदम् ॥ १।४।९९**

लादेशाः परस्मैपद संज्ञाः स्युः ॥

**३७८. तङानावात्मनेपदम् ॥ १।४।१००**

तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्व संज्ञापवादः ॥

**३७९. अनुदात्तङित आत्मनेपदम् ॥ १।३।१२**

अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात् ॥

**३८०. स्वरितञितः कर्त्रभिप्राये क्रियाफले ॥ १।३।७२**

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले ॥

**३८१. शेषात्कर्तरि परस्मैपदम् ॥ १।३।७८**

आत्मनेपद निमित्त हीनाद्धातोः कर्तरि परस्मैपदं स्यात् ॥

**३८२. तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ १।४।१०१**

तिङ उभयोः पदयोस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ॥

**३८३. तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ १।४।१०२**

लब्ध प्रथमादि संज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचनादि संज्ञानि स्युः ॥

**३८४. युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥ १।४।१०५**

तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः ॥

**३८५. अस्मद्युत्तमः ॥ १।४।१०७**

तथाभूतेऽस्मद्युत्तमः ॥

**३८६. शेषे प्रथमः ॥ १।४।१०८**

मध्यमोत्तमयोरविषये प्रथमः स्यात् । भू ति इति जाते ॥

**३८७. तिङ् शित्सार्वधातुकम् ॥ ३।४।११३**

तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ॥

**३८८. कर्तरि शप् ॥ ३।१।६८**

कर्त्रर्थे सार्वधातुके परे धातोः शप् ॥

**३८९. सार्वधातुकार्धधातुकयोः ॥ ७।३।८४**

अनयोः परयोरिगन्ताङ्गस्य गुणः । अवादेशः । भवति । भवतः ॥

**३९०. झोऽन्तः ॥ ७।१।३**

प्रत्ययावयवस्य झस्यान्तादेशः । अतो गुणे । भवन्ति । भवसि । भवथः । भवथ ॥

## ३९१. अतो दीर्घो यञि ॥ ७।३।१०१

अतोऽङ्गस्य दीर्घो यञादौ सार्वधातुके । भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां भवावः । वयं भवामः ॥

## ३९२. परोक्षे लिट् ॥ ३।२।११५

भूतानद्यतन परोक्षार्थवृत्तेर् धातोर्लिट् स्यात् । लस्य तिबादयः ।

## ३९३. परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ ३।४।८२

लिटस्तिबादीनां नवानां णलादयः स्युः । भू अ इति स्थिते -- .

## ३९४. भुवो वुग्लुङ्लिटोः ॥ ६।४।८८

भुवो वुगागमः स्यात् लुङ्लिटोरचि ॥

## ३९५. लिटि धातोरनभ्यासस्य ॥ ६।१।८

लिटि परेऽनभ्यासधात्ववयस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य । भूव् भूव् अ इति स्थिते -- .

## ३९६. पूर्वोऽभ्यासः ॥ ६।१।४

अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् ॥

## ३९७. हलादिः शेषः ॥ ७।४।६०

अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते । इति वलोपः ॥

## ३९८. ह्रस्वः ॥ ७।४।५९

अभ्यासत्याचो ह्रस्वः स्यात् ॥

## ३९९. भवतेरः ॥ ७।४।७३

भवतेरभ्यासोकारस्य अः स्याल्लिटि ॥

## ४००. अभ्यासे चर्च ॥ ८।४।५४

अभ्यासे झलां चरः स्युर्जशश्च । झशां जशः खयां चर इति विवेकः । बभूव । बभुवतुः । बभूवुः ॥

## ४०१. लिट् च ॥ ३।४।११५

लिडादेशस्तिङ्ङार्धधातुकसंज्ञः ॥

## ४०२. आर्धधातुकस्येड्वलादेः ॥ ७।२।३५

वलादेरार्धधातुरस्येडागमः स्यात् । बभूविथ । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम ।

## ४०३. अनद्यतने लुट् ॥ ३।३।१५

भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात् ॥

## ४०४. स्यतासी लृलुटोः ॥ ३।१।३३

धातोः ***स्य तासि*** एतौ प्रत्ययौ स्तो लृलुटोः परतः। शबाद्यपवादः। ***लृ*** इति लृङ्लृटोर्ग्रहणम्।

## ४०५. आर्धधातुकं शेषः ॥ २।४।११४

तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात्। इट् ॥

## ४०६. लुटः प्रथमस्य डारौरसः ॥ २।४।८५

***डा रौ रस्*** एते क्रमात्स्युः। डित्वसामर्थ्यादभस्यापि टेर्लोपः। भविता ॥

## ४०७. तासस्त्योर्लोपः ॥ ७।४।५०

तासेरस्तेश्च सस्य लोपस्स्यात् सादौ प्रत्यये परे।

## ४०८. रि च ॥ ७।४।५१

रादौ प्रत्यये तथा। भवितारौ। भवितारः। भवितासि। भवितास्थः। भवितास्थ। भवितास्मि। भवितास्वः। भवितास्मः/

## ४०९. लृट् शेषे च ॥ ३।३।१३

भविष्यदर्थाद्धातोर्लृट् क्रियार्थायां क्रियायां सत्यामसत्यां वा । स् य इट् । भविष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः/

## ४१०. लोट् च ॥ ३।३।१६२

विध्याद्यर्थेषु धातोर्लोट् ॥

## ४११. आशिषि लिङ्लोटौ ॥ ३।३।१७३

## ४१२. एरुः ॥ ३।४।८६

लोट इकारस्य उः । भवतु ॥

## ४१३. तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ॥ ७।१।३५

आशिषि तुह्योस्तातङ् वा । परत्वात्सर्वादेशः । भवतात् ॥

## ४१४. लोटो लङ्वत् ॥ ३।४।८५

लोटस्तामादयस्सलोपश्च ॥

## ४१५. तस्थस्थमिपां तांतंतामः ॥ ३।४।१०१

ङितश्चतुर्णां तामादयः क्रमात्स्युः । भवताम् । भवन्तु ॥

## ४१६. सेर्ह्यपिच्च ॥ ३।४।८७

लोटः सेर्हिः सोऽपिच्च ॥

## ४१७. अतो हेः ॥ ६।४।१०५

अतः परस्य हेर्लुक् । भव । भवतात् । भवतम् । भवत ।

## ४१८. मेर्निः ॥ ३।४।८९

लोटो मेर्निः स्यात् ॥

## ४१९. आडुत्तमस्य पिच्च ॥ ३।४।९२

लोडुत्तमस्याट् स्यात् पिच्च । हिन्योरुत्वं न, इकारोच्चारण सामर्थ्यात् ॥

## ४२०. ते प्राग्धातोः ॥ १।४।८०

ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः ॥

## ४२१. आनि लोट् ॥ ८।४।१६

उपसर्गसिथान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात् । प्रभवाणि / (***दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः***)/ दुःस्थितिः । दुर्भवानि/ (***अन्तश्शब्दस्याङ्कि विधिणत्वेषूपसर्गत्वं वाच्यम्***)/ अन्तर्भवाणि ॥

## ४२२. नित्यं ङितः ॥ ३।४।९९

सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः । अलोऽन्त्यस्येति सलोपः । भवाव । भवाम ।

**४२३. अनद्यतने लङ् ॥ ३।२।१११**

अनद्यतन भूतार्थ वृत्तेर् धातोर् लङ् स्यात् ॥

**४२४. लुङ्लङ्लृङ्क्ष्वडुदात्तः ॥ ६।४।७१**

एष्वङ्गस्याट् ॥

**४२५. इतश्च ॥ ३।४।१००**

ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ॥

**४२६. विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ॥ ३।३।१६१**

एष्वर्थेषु धातोर्लिङ् ॥

**४२७. यासुट् परस्मैपदेषूदात्तो ङिच्च ॥ ३।४।१०३**

लिङः परस्मैपदानां यासुडागमो ङिच्च ॥

**४२८. लिङः सलोपोऽनन्त्यस्य ॥ ७।२।७९**

सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः । इति प्राप्ते -- .

**४२९. अतो येयः ॥ ७।२।८०**

अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय् । गुणः ॥

## ४३०. लोपो व्योर्वलि ॥ ६।१।६६

भवेत् । भवेताम् ।

## ४३१. झेर्जुस् ॥ ३।४।१०८

लिङो झेर्जुस् स्यात् । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम ॥

## ४३२. लिङाशिषि ॥ ३।४।११६

आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात् ॥

## ४३३. किदाशिषि ॥ ३।४।१०४

आशिषि लिङो यासुट् कित् । स्कोः संयोगाद्योरिति सलोपः ॥

## ४३४. क्ङिति च ॥ १।१।५

गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ।

## ४३५. लुङ् ॥ ३।२।११०

भूतार्थे धातोर्लुङ् स्यात् ॥

## ४३६. माङि लुङ् ॥ ३।३।१७५

सर्वलकारापवादः ॥

## ४३७. स्मोत्तरे लङ् च ॥ ३।३।१७६

स्मोत्तरे माङि लङ् स्याच्चाल्लुङ् ॥

## ४३८. च्लि लुङि ॥ ३।१।४३

शबाद्यपवादः ॥

## ४३९. च्लेः सिच् ॥ ३।१।४४

इचावितौ ॥

## ४४०. गातिस्थापाभूभ्यः सिचः परस्मैपदेषु ॥ २।४।७७

एभ्यः सिचो लुक् स्यात् । गापाविहेणादेशपिबती गृह्यते ॥

## ४४१. भूसुवोस्तिङि ॥ ७।३।८८

भू सू एतयोः सार्वधातुके तिङि परे गुणो न । अभूत् । अभूताम् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ।

## ४४२. न माङ्योगे ॥ ६।४।७४

अडाटौ न स्तः । मा भवान् भूत् । मा स्म भवत् । मा स्म भूत् ॥

## ४४३. लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ ३।३।१३९

हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् ।

अभविष्याव । अभविष्याम । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्, इत्यादि ज्ञेयम् ॥ अत सातत्यगमने ॥ २ ॥ अतति ॥

### ४४४. अत आदेः ॥ ६।४।७०

अभ्यासस्यादेरतो दीर्घः स्यात् । आत । आततुः । आतुः । आतिथ । आतथुः । आत । आत । आतिव । आतिम । अतिता । अतिष्यति । अततु ॥

### ४४५. आडजादीनाम् ॥ ६।४।७२

अजादेरङ्गस्याट् लुङ्लङ्लृङ्क्षु । आतत् । अतेत् । अत्यात् । अत्यास्ताम् । लुङि सिचि इडागमे कृते --- .

### ४४६. अस्तिसिचोऽपृक्ते ॥ ७।३।९६

विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः ॥

### ४४७. इट ईटि ॥ ८।२।२८

इटः परस्य सस्य लोपः स्यादीटि परे । (***सिज्लोप एकादेशे सिद्धो वाच्यः)*** । आतीत् । आतिष्टाम् ॥

### ४४८. सिजभ्यस्तविदिभ्यश्च ॥ ३।४।१०९

सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस् । आतिषुः । आतीः । आतिष्टम् । आतिष्ट । आतिषम् । आतिष्व । आतिष्म । आतिष्यत् ॥ षिध गत्याम् ॥ ३ ॥

### ४४९. ह्रस्वं लघु ॥ १।४।१०

### ४५०. संयोगे गुरु ॥ १।४।११

संयोगे परे ह्रस्वं गुरु स्यात् ॥

### ४५१. दीर्घं च ॥ १।४।१२

गुरु स्यात् ॥

### ४५२. पुगन्तलघूपधस्य च ॥ ७।३।८६

पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः सार्वधातुकार्धधातुकयोः । धात्वादेरिति सः । सेधति । षत्वम् । सिषेध ॥

### ४५३. असंयोगाल्लिट् कित् ॥ १।२।५

असंयोगात्परोऽपिल्लिट् कित् स्यात् । सिषिधतुः । सिषिधुः । सिषेधिथ । सिषिधथुः । सिषिध । सिषेध । सिषिधिव । सिषिधिम । सेधिता । सेधिष्यति । सेधतु । असेधत् । सेधेत् । सिध्यात् । असेधीत् । असेधिष्यत् । एवम् -- चिती संज्ञाने ॥ ४ ॥ शुच शोके ॥ ५ ॥ गद व्यक्तायां वाचि ॥ ६ ॥ गदति ॥

**४५४. नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यति चिनोतिदेग्धिषु च ॥ ८।४।१७**

उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णो गदादिषु परेषु । प्रणिगदति ॥

**४५५. कुहोश्चुः ॥ ७।४।६२**

अभ्यासकवर्गहकारयोश्चवर्गादेशः ॥

**४५६. अत अपधायाः ॥ ७।२।११६**

उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे । जगाद । जगदतुः । जगदुः । जगदिथ । जगदथुः । जगद ॥

**४५७. णलुत्तमो वा ॥ ७।१।९१**

उत्तमो णल् वा णित्स्यात् । जगाद, जगद । जगदिव । जगदिम । गदिता । गदिष्यति । गदतु । अगदत् । गदेत् । गद्यात् ॥

**४५८. अतो हलादेर्लघोः ॥ ७।२।७**

हलादेर्लघोरकारस्य वृद्धिर्वेडादौ परस्मैपदे सिचि । अगादीत्, अगदीत् । अगदिष्यत् ॥ णद अव्यक्ते शब्दे ॥ ७ ॥

**४५९. णो नः ॥ ६।१।६५**

 

धात्वादेर्णस्य नः । णोपदेशास्त्वनर्द्दाटिनाथ्नाध्नन्दनक्ककनॄनृतः ॥

## ४६०. उपसर्गादसमासेऽपि णोपदेशस्य ॥ ८।४।१४

उपसर्गस्थान्निमित्तात्परस्य धातोर्नस्य णः । प्रणदति । प्रणिनदति । नदति । ननाद ॥

## ४६१. अत एकहल्मध्येऽनादेशादेर्लिटि ॥ ६।४।१२०

लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वमभ्यासलोपश्च किति लिटि । नेदतुः । नेदुः ॥

## ४६२. थलि च सेटि ॥ ६।४।१२१

प्रागुक्तं स्यात् । नेदिथ । नेदथुः । नेद । ननाद, ननद । नेदिव । नेदिम । नदिता । नदिष्यति । नदतु । अनदत् । नदेत् । नद्यात् । अनादीत्, अनदीत् । अनदिष्यत् ॥ टु नदि समृद्धौ ॥ ८ ॥

## ४६३. आदिर्ञिटुडवः ॥ १।३।५

उपदेशे धातोराद्या एते इतः स्युः ॥

## ४६४. इदितो नुम् धातोः ॥ ७।१।५८

नन्दति । ननन्द । नन्दिता । नन्दिष्यति । नन्दतु । अनन्दत् । नन्देत् । नन्द्यात् । अनन्दीत् । अनन्दिष्यत् । अर्च पूजायाम् ॥ ९ ॥ अर्चति ॥

## ४६५. तस्मान्नुड् द्विहलः ॥ ७।४।७१

द्विहलो धातोर्दीर्घीभूतात्परस्य नुट् स्यात् । आनर्च । आनर्चतुः । अर्चिता । अर्चिष्यति । अर्चतु । आर्चत् । अर्चेत् । अर्च्यात् । आर्चीत् । आर्चिष्यत् ॥ व्रज गतौ ॥ १० ॥ व्रजति । वव्राज । व्रजिता । व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् ॥

## ४६६. वदव्रजहलन्तस्याचः ॥ ७।२।३

एषामचो वृद्धिः सिचि परस्मैपदेषु । अव्राजीत् । अव्रजिष्यत् ॥ कटे वर्षावरणयोः ॥ ११ ॥ कटति । चकाट । चकटतुः । कटिता । कटिष्यति । कटतु । अकटत् । कटेत् । कट्यात् ॥

## ४६७. ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥ ७।२।५

हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नेडादौ सिचि । अकटीत् । अकटिष्यत् ॥ गुपू रक्षणे ॥ १२ ॥

## ४६८. गुपूधूपविच्छिपणिपनिभ्य आयः ॥ ३।१।२८

एभ्य आयः प्रत्ययः स्यात् स्वार्थे ॥

## ४६९. सनाद्यन्ता धातवः ॥ ३।१।३२

सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञकाः । धातुत्वाल्लडादयः । गोपायति ॥

## ४७०. आयादय आर्धधातुके वा ॥ ३।१।३१

आर्धधातुकविवक्षायामायादयो वा स्युः । (***कास्यनेकाच आम् वक्तव्यः***) । लिटि आस्कासोराम्विधानान्मस्य नेत्त्वम् ॥

## ४७१. अतो लोपः ॥ ६।४।४८

आर्धधातुकोपदेशे यददन्तं तस्यातो लोप आर्धधातुके ॥

## ४७२. आमः ॥ २।४।८१

आमः परस्य लुक् ॥

## ४७३. कृञ् चानुप्रयुज्यते लिटि ॥ ३।१।४०

आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते । तेषां द्वित्वादि ॥

## ४७४. उरत् ॥ ७।४।६६

अभ्यासऋवर्णस्यात् प्रत्यये । रपरः । हलादिः शेषः । वृद्धिः । गोपायाञ्चकार । द्वित्वात्परत्वाद्यणि प्राप्ते ----- .

## ४७५. द्विर्वचनेऽचि ॥ १।१।५९

द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये । गोपायाञ्चक्रतुः ॥

## ४७६. एकाच उपदेशेऽनुदात्तात् ॥ ७।२।१०

उपदेशे यो धातुरेकाजनुदात्तश्च तत आर्धधातुकस्येण्न ।

**ऊदॄदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः ।**

**वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥**

कान्तेषु शक्लेकः । चान्तेषु पच्मुच्रिच्वच्विच्सिचः षट् । छान्तेषु प्रच्छेकः । जान्तेषु त्यजिनिजिर्भज्भञ्जभुज्भ्रस्ज्मस्ज्यज्युज्रुज् रञ्जिवजिर्स्वञ्जसञ्जसृजः पञ्चदश ॥ दान्तेषु अद्क्षुद्खिद्छिद्तुद् नुद्पद्यभिद्विद्यतिविनद्विन्द्शद्सद्स्विद्यस्कन्धदः षोडश । धान्तेषु क्रुध्क्षुध्बुध्यबन्ध्युध्रुध्राध्व्यध्साध्शुध्सिध्या एकादश । नान्तेषु मन्यहनी द्वौ । पान्तेषु आप्छुप्क्षिप्तप्तिप्तृप्यदृप्यलिपलुप्वप्शप्स्वप् सृपस्त्रयोदश । भान्तेषु यभ्रभ्लभस्त्रयः । मान्तेषु गम्यम्नम्रमश्चत्वारः । शान्तेषु क्रुश्दंश्दिश्दृश्मृश्रिश्रुश्लिश्विश्स्पृशो दश । षान्तेषु कृष् त्विष्तुष्द्विष्पुष्यपिष्विष्शिष्शुष्श्लिष्या एकादश ॥ सान्तेषु घस्वसती द्वौ । हान्तेषु दह्दिह्दुह्नह्मिह्रुह्लिह्वहोऽष्टौ ।

**अनुदात्ता हलन्तेषु धातवस्त्र्यधिकं शतम् ।**

गोपायाञ्चकर्थ । गोपायाञ्चक्रथुः । गोपायाञ्चक्र । गोपायाञ्चकार । गोपायाञ्चकर । गोपायाञ्चकृव । गोपायाञ्चकृम । गोपायाम्बभूव, गोपायामास । जुगोप । जुगुपतुः । जुगुपुः ॥

## ४७७. स्वरतिसूतिसूयतिधूञूदितो वा ॥ ७।२।४४

स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड् वा स्यात् । जुगोपिथ, जुगोप्थ । गोपायिता, गोपिता, गोप्ता । गोपायिष्यति, गोपिष्यति, गोप्स्यति । गोपायतु । अगोपायत् । गोपायेत् । गोपाय्यात्, गुप्यात् । अगोपायीत् ॥

### ४७८. नेटि ॥ ७।२।४

इडादौ सिचि हलन्तस्य वृद्धिर्न । अगोपीत्, अगौप्सीत् ॥

### ४७९. झलो झलि ॥ ८।२।२६

झलः परस्य सस्य लोपो झलि । अगौप्ताम् । अगौप्सुः । अगौप्सीः । अगौप्तम् । अगौप्त । अगौप्सम् । अगौप्स्व । अगौप्स्म । अगोपायिष्यत्, अगोपिष्यत्, अगोप्स्यत् ॥ क्षि क्षये ॥ १३ ॥ क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । एकाच इति निषेधे प्राप्ते -- .

### ४८०. कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥ ७।२।१३

क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोऽपि स्यात् ॥

### ४८१. अचस्तास्वत्थल्यनिटो नित्यम् ॥ ७।२।६१

उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततस्थल इण्न ॥

### ४८२. उपदेशेऽत्वतः ॥ ७।२।६२

उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण्न स्यात् ॥

## ४८३. ऋतो भारद्वाजस्य ॥ ७।२।६३

तासौ नित्यानिट ऋदन्तादेव थलो नेट् भारद्वाजस्य मते । तेन अन्यस्य स्यादेव । अयमत्र संग्रहः-

**अजन्तोऽकारवान्वा यस्तास्यनिट्थलि वेडयम् ।**
**ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड्भवेत् ॥**

चिक्षयिथ, चिक्षेथ । चिक्षियथुः । चिक्षिय । चिक्षाय, चिक्षय । चिक्षियिव । चिक्षियिम । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् । क्षयेत् ॥

## ४८४. अकृत्सार्वधातुकयोर्दीर्घः ॥ ७।४।२५

अजन्ताङ्गस्य दीर्घो यादौ प्रत्यये न तु कृत्सार्वधातुकयोः । क्षीयात् ॥

## ४८५. सिचि वृद्धिः परस्मैपदेषु ॥ ७।२।१

इगन्ताङ्गस्य वृद्धिः स्यात् परस्मैपदे सिचि । अक्षैषीत् । अक्षेष्यत् ॥ तप सन्तापे ॥ १४ ॥ तपति । तताप । तेपतुः । तेपुः । तेपिथ, ततप्थ । तेपिव । तेपिम । तप्ता । तप्स्यति । तपतु । अतपत् । तपेत् । तप्यात् । अताप्सीत् । अताप्ताम् । अतप्स्यत् ॥ क्रमु पादविक्षेपे ॥ १५ ॥

## ४८६. वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ॥ ३।१।७०

एभ्यः श्यन्वा कर्त्रर्थे सार्वधातुके परे। पक्षे शप्॥

## ४८७. क्रमः परस्मैपदेषु॥ ७।३।७६

क्रमो दीर्घः परस्मैपदे शिति। क्राम्यति, क्रामति। चक्राम। क्रमिता। क्रमिष्यति। क्राम्यतु, क्रामतु। अक्राम्यत्, अक्रामत्। क्राम्येत्। क्रामेत्। क्रम्यात्। अक्रमीत्। अक्रमिष्यत्॥ पा पाने॥ १६॥

## ४८८. पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः॥ ७।३।७८

पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे। पिबादेशोऽदन्तस्तेन न गुणः। पिबति॥

## ४८९. आत औ णलः॥ ७।१।३४

आदन्ताद्धातोर्णल औकारादेशः स्यात्। पपौ॥

## ४९०. आतो लोप इटि च॥ ६।४।६४

अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः। पपतुः। पपुः। पपिथ, पपाथ। पपथुः। पप। पपौ। पपिव। पपिम। पाता। पास्यति। पिबतु। अपिबत्। पिबेत्॥

## ४९१. एर्लिङि ॥ ६।४।६७

घुसंज्ञकानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि । पेयात् । गातिस्थेति सिचो लुक् । अपात् । अपाताम् ॥

## ४९२. आतः ॥ ३।४।११०

सिज्लुकि आदन्तादेव झेर्जुस् ॥

## ४९३. उस्यपदान्तात् ॥ ६।१।९६

अपदान्तादकारादुसि पररूपमेकादेशः । अपुः । अपास्यत् ॥ ग्लै हर्षक्षये ॥ १७ ॥ ग्लायति ॥

## ४९४. आदेच उपदेशेऽशिति ॥ ६।१।४५

उपदेशे एजन्तस्य धातोरात्वं न तु शिति । जग्लौ । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् ॥

## ४९५. वान्यस्य संयोगादेः ॥ ६।४।६८

घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वार्धधातुके किति लिङि । ग्लेयात्, ग्लायात् ॥

## ४९६. यमरमनमातां सक् च ॥ ७।२।७३

एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु । अग्लासीत् । अग्लास्यत् ॥ ह्वृ कौटिल्ये ॥ १८ ॥ ह्वरति ॥

 

## ४९७. ऋतश्च संयोगादेर्गुणः ॥ ७।४।१०

ऋदन्तस्य संयोगादेरङ्गस्य गुणो लिटि । उपधाया वृद्धिः । जह्वार । जह्वरतुः । जह्वरुः । जह्वर्थ । जह्वरथुः । जह्वर । जह्वार, जह्वर । जह्वरिव । जह्वरिम । ह्वर्ता ॥

## ४९८. ऋद्धनोः स्ये ॥ ७।२।१०

ऋतो हन्तेश्च स्यस्येट् । ह्वरिष्यति । ह्वरतु । अह्वरत् । ह्वरेत् ॥

## ४९९. गुणोऽर्तिसंयोगाद्योः ॥ ७।४।२९

अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिङि च । ह्वर्यात् । अह्वार्षीत् । अह्वरिष्यत् ॥ श्रु श्रवणे ॥ १९ ॥

## ५००. श्रुवः शृ च ॥ ६।१।७४

श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च । शृणोति ॥

## ५०१. सार्वधातुकमपित् ॥ १।२।४

अपित्सार्वधातुकं ङिद्वत् । शृणुतः ॥

## ५०२. हुश्नुवोः सार्वधातुके ॥ ६।४।८७

हुश्नुवोरनेकाचोऽसंयोगपूर्वस्योवर्णस्य यण् स्यादचि सार्वधातुके । शृण्वन्ति । शृणोषि । शृणुथः । शृणुथ । शृणोमि ॥

## ५०३. लोपश्चास्यान्यतरस्यां म्वोः ॥ ६।४।१०७

 

असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः । शृण्वः, शृणुवः । शृण्मः, शृणुमः । शुश्राव । शुश्रुवतुः । शुश्रुवुः । शुश्रोथ । शुश्रुवथुः । शुश्रुव । शुश्राव, शुश्रव । शुश्रुव । शुश्रुम । श्रोता । श्रोष्यति । शृणोतु, शृणुतात् । शृणुताम् । शृण्वन्तु ॥

## ५०४. उतश्च प्रत्ययादसंयोगपूर्वात् ॥ ६।४।१०६

असंयोगपूर्वात्प्रत्ययोतो हेर्लुक् । शृणु, शृणुतात् । शृणुतम् । शृणुत । गुणावादेशौ । शृणवानि । शृणवाव । शृणवाम । अशृणोत् । अशृणुताम् । अशृण्वन् । अशृणोः । अशृणुतम् । अशृणुत । अशृणवम् । अशृण्व, अशृणुव । अशृण्म, अशृणुम । शृणुयात् । शृणुयाताम् । शृणुयुः । शृणुयाः । शृणुयातम् । शृणुयात । शृणुयाम् । शृणुयाव । शृणुयाम । श्रूयात् । अश्रौषीत् । अश्रोष्यत् ॥ गम्ऌ गतौ ॥ २० ॥

## ५०५. इषुगमियमां छः ॥ ७।३।७७

एषां छः स्यात् शिति । गच्छति । जगाम ॥

## ५०६. गमहनजनखनघसां लोपः क्ङित्यनङि ॥ ६।४।९८

एषामुपधाया लोपोऽजादौ क्ङिति न त्वङि । जग्मतुः । जग्मुः । जगमिथ, जगन्थ । जग्मथुः । जग्म । जगाम, जगम । जग्मिव । जग्मिम । गन्ता ॥

## ५०७. गमेरिट् परस्मैपदेषु ॥ ७।२।५८

गमेः परस्य सादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु । गमिष्यति । गच्छतु । अगच्छत् । गच्छेत् । गम्यात् ॥

## ५०८. पुषादिद्युताद्य्लृदितः परस्मैपदेषु ॥ ३।१।५५

श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च च्लेरङ् परस्मैपदेषु । अगमत् । अगमिष्यत् ॥

*इति परस्मैपदिनः ।*

एध वृद्धौ ॥ १ ॥

## ५०९. टित आत्मनपदानां टेरे ॥ ३।४।७९

टितो लस्यात्मनेपदानां टेरेत्वम् । एधते ॥

## ५१०. आतो ङितः ॥ ७।२।८१

अतः परस्य ङितामाकारस्य इय् स्यात् । एधेते । एधन्ते ॥

## ५११. थासः से ॥ ३।४।८०

टितो लस्य थासः से स्यात् । एधसे । एधेथे । एधध्वे । अतो गुणे । एधे । एधावहे । एधामहे ॥

## ५१२. इजादेश्च गुरुमतोऽनृच्छः ॥ ३।१।३६

इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि ॥

 

## ५१३. आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ॥ १।३।६३

आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदम् ॥

## ५१४. लिटस्तझयोरेशिरेच् ॥ ३।४।८१

लिडादेशयोस्तझयोरेश् इरेजेतौ स्तः । एधाञ्चक्रे । एधाञ्चक्राते । एधाञ्चक्रिरे । एधाञ्चकृषे । एधाञ्चक्राथे ॥

## ५१५. इणः षीध्वंलुङ्लिटां धोऽङ्गात् ॥ ८।३।७८

इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः स्यात् ॥ एधाञ्चकृढ्वे । एधाञ्चक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे । एधाम्बभूव । एधामास । एधिता । एधितारौ । एधितारः । एधितासे । एधितासाथे ॥

## ५१६. धि च ॥ ८।२।२५

धादौ प्रत्यये परे सस्य लोपः । एधिताध्वे ॥

## ५१७. ह एति ॥ ७।४।२५

तासस्त्योः सस्य हः स्यादेति परे । एधिताहे । एधितास्वहे । एधितास्महे । एधिष्यते । एधिष्येते । एधिष्यन्ते । एधिष्यसे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे ॥

## ५१८. आमेतः ॥ ३।४।९०

लोट एकारस्याम् स्यात् । एधताम् । एधेताम् । एधन्ताम् ॥

## ५१९. सवाभ्यां वामौ ॥ ३।४।९१

सवाभ्याम् परस्य लोडेतः क्रमाद्वामौ स्तः । एधस्व । एधेथाम् । एधध्वम् ॥

## ५२०. एत ऐ ॥ ३।४।९३

लोडुत्तमस्य एत ऐ स्यात् । एधै । एधावहै । एधामहै ॥ आटश्च । ऐधत । ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि ॥

## ५२१. लिङः सीयुट् ॥ ३।४।१०२

सलोपः । एधेत । एधेयाताम् ॥

## ५२२. झस्य रन् ॥ ३।४।१०५

लिङो झस्य रन् स्यात् । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् ॥

## ५२३. इटोऽत् ॥ ३।४।१०६

लिङादेशस्य इटोऽत्स्यात् । एधेय । एधेवहि । एधेमहि ॥

## ५२४. सुट् तिथोः ॥ ३।४।१०७

लिङस्तथोः सुट् । यलोपः । आर्धधातुकत्वात्सलोपो न । एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम् । एधिषीय । एधिषीवहि । एधिषीमहि । ऐधिष्ट । ऐधिषाताम् ॥

## ५२५. आत्मनेपदेष्वनतः ॥ ७।१।५

अनकारात्परस्यात्मनेपदेषु झस्य अदित्यादेशः स्यात् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् । ऐधिढ्वम् । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त । ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम् । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि ॥ कमु कान्तौ ॥ २ ॥

## ५२६. कमेर्णिङ् ॥ ३।१।३०

स्वार्थे । ङित्त्वात्तङ् । कामयते ॥

## ५२७. अयामन्ताल्वाय्येत्न्विष्णुषु ॥ ६।४।५५

आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् । कामायाञ्चक्रे । आयादय इति णिङ् वा । चकमे । चकमाते । चकमिरे । चकमिषे । चकमाथे । चकमिध्वे । चकमे । चकमिवहे । चकमिमहे । कामयिता । कामयितासे । कमिता । कामयिष्यते, कमिष्यते । कामयताम् । अकामयत । कामयेत । कामयिषीष्ट ॥

## ५२८. विभाषेटः ॥ ८।३।७९

इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः । कामयिषीढ्वम्, कामयिषीध्वम् । कमिषीष्ट । कमिषीध्वम् ॥

## ५२९. णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥ ३।१।४८

ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे । अकामि अ त इति स्थिते -- .

## ५३०. णेरनिटि ॥ ६।४।५१

अनिडादावार्धधातुके परे णेर्लोपः स्यात् ।

## ५३१. णौ चङ्युपधाया ह्रस्वः ॥ ७।४।१

चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ॥

## ५३२. चङि ॥ ६।१।११

चङि परे अनभ्यासस्य धात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेर्द्वितीयस्य ॥

## ५३३. सन्वल्लघुनि चङ्परेऽनग्लोपे ॥ ७।४।९३

चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः, तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति ॥

## ५३४. सन्यतः ॥ ७।४।७९

अभ्यासस्यात इत् स्यात् सनि ॥

**५३५. दीर्घो लघोः ॥ ७।४।९४**

लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये । अचीकमत, णिङ्भावपक्षे -- (***कमेश्च्लेश्चङ् वाच्यः***) । अचकमत । अकामयिष्यत, अकमिष्यत ॥ अय गतौ ॥ ३ ॥ अयते ॥

**५३६. उपसर्गस्यायतौ ॥ ८।२।१९**

अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् । प्लायते । पलायते ॥

**५३७. दयायासश्च ॥ ३।१।३७**

दय् अय् आस् एभ्य आम् स्याल्लिटि । अयाञ्चक्रे । अयिता । अयिष्यते । अयताम् । आयत । अयेत । अयिषीष्ट । विभाषेटः । अयिषीढ्वम्, अयिषीध्वम् । आयिष्ट । आयिढ्वम्, आयिध्वम् । आयिष्यत ॥ द्युत दीप्तौ ॥ ४ ॥ द्योतते ॥

**५३८. द्युतिस्वाप्योः सम्प्रसारणम् ॥ ७।४।६७**

अनयोरभ्यासस्य सम्प्रसारणं स्यात् । दिद्युते ॥

**५३९. द्युद्भ्यो लुङि ॥ १।३।९१**

 

द्युतादिभ्यो लुङः परस्मैपदं वा स्यात् । पुषादीत्यङ् । अद्युतत्, अद्योतिष्ट । अद्योतिष्यत ॥ एवं श्विता वर्णे ॥ ५ ॥ ञिमिदा स्नेहने ॥ ६ ॥ ञिष्विदा स्नेहनमोचनयोः ॥ ७ ॥ मोहनयोरित्येके । ञिक्ष्विदा चेत्येके ॥ रुच दीप्तावभिप्रीतौ च ॥ ८ ॥ घुट परिवर्तने ॥ ९ ॥ शुभ दीप्तौ ॥ १० ॥ क्षुभ संचलने ॥ ११ ॥ णभ तुभ हिंसायाम् ॥ १२-१३ ॥ स्रंसु भ्रंसु ध्वंसु अवस्रंसने ॥ १४-१५-१६ ॥ ध्वंसु गतौ च ॥ स्रम्भु विश्वासे ॥ १७ ॥ वृतु वर्तने ॥ १८ ॥ वर्तते । ववृते । वर्तिता ॥

## ५४०. वृद्भ्यः स्यसनोः ॥ १।४।९२

वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्यात्स्ये सनि च ॥

## ५४१. न वृद्भ्यश्चतुर्भ्यः ॥ ७।२।५९

वृतुवृधुशृधुस्यन्दूभ्यः सकारादेरार्धधातुकस्येण् न स्यात् तङानयोरभावे । वर्त्स्यति, वर्तिष्यते । वर्तताम् । अवर्तत । वर्तेत । वर्तिषीष्ट । अवर्तिष्ट । अवर्त्स्यत्, अवर्तिष्यत् ॥ दद दाने ॥ १९ ॥ ददते ॥

## ५४२. न शसददवादिगुणानाम् ॥ ६।४।१२६

शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्य एत्त्वाभ्यासलोपौ न । दददे । दददाते । दददिरे । ददिता । ददिष्यते ।

ददताम् । अददत । ददेत । ददिषीष्ट । अददिष्ट । अददिष्यत ॥ त्रपूष् लज्जायाम् ॥ २० ॥ त्रपते ॥

## ५४३. तृफलभजत्रपश्च ॥ ६।४।१२२

एषामत एत्त्वमभ्यासलोपश्च स्यात् किति लिटि सेटि थलि च । त्रेपे । त्रपिता, त्रप्ता । त्रपिष्यते, त्रप्स्यते । त्रपताम् । अत्रपत । त्रपेत । त्रपिषीष्ट, त्रप्सीष्ट । अत्रपिष्ट, अत्रप्त । अत्रपिष्यत, अत्रप्स्यत ॥

*इत्यात्मनेपदिनः*

श्रिञ् सेवायाम् ॥ १ ॥ श्रयति, श्रयते । शिश्राय, शिश्रिये । श्रयितासि, श्रयितासे । श्रयिष्यति, श्रयिष्यते । श्रयतु, श्रयताम् । अश्रयत्, अश्रयत । श्रयेत्, श्रयेत । श्रीयात्, श्रयिषीष्ट । चङ् । अशिश्रियत्, अशिश्रियत । अश्रयिष्यत्, अश्रयिष्यत ॥ भृञ् भरणे ॥ २ ॥ भरति, भरते । बभार । बभ्रतुः । बभ्रुः । बभर्थ । बभृव । बभृम । बभ्रे । बभृषे । भर्तासि, भर्तासे । भरिष्यति, भरिष्यते । भरतु, भरताम् । अभरत्, अभरत । भरेत्, भरेत ॥

## ५४४. रिङ् शयग्लिङ्क्षु ॥ ७।४।२८

शे यकि यादावार्धधातुके लिङि च ऋतो रिङ् आदेशः स्यात् । रीङि प्रकृते रिङ्विधानसामर्थ्याद्दीर्घो न । भ्रियात् ॥

 

## ५४५. उश्च ॥ १।२।१२

ऋवर्णात्परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । भृषीष्ट । भृषीयास्ताम् । अभार्षीत् ॥

## ५४६. ह्रस्वादङ्गात् ॥ ८।२।२७

सिचो लोपो झलि । अभृत । अभृषाताम् । अभरिष्यत्, अभरिष्यत ॥ हृञ् हरणे ॥ ३ ॥ हरति, हरते । जहार । जहर्थ । जह्रिव । जह्रिम । जह्रे । जह्रिषे । हर्तासि, हर्तासे । हरिष्यति, हरिष्यते । हरतु, हरताम् । अहरत्, अहरत । हरेत्, हरेत । ह्रियात्, हृषीष्ट । हृषीयास्ताम् । अहार्षीत्, अहृत । अहरिष्यत्, अहरिष्यत ॥ धृञ् धारणे ॥ ४ ॥ धरति, धरते ॥ णीञ् प्रापणे ॥ ५ ॥ नयति, नयते ॥ डुपचष् पाके ॥ ६ ॥ पचति, पचते । पपाच । पेचिथ, पपक्थ । पेचे । पक्तासि, पक्तासे ॥ भज सेवायाम् ॥ ७ ॥ भजति, भजते । बभाज, भेजे । भक्तासि, भक्तासे । भक्ष्यति, भक्ष्यते । अभाक्षीत्, अभक्त । अभक्षाताम् ॥

यज देवपूजा सङ्गतिकरणदानेषु ॥ ८ ॥ यजति, यजते ॥

## ५४७. लिट्यभ्यासस्योभयेषाम् ॥ ६।१।१७

वच्यादीनां ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणं लिटि । इयाज ॥

## ५४८. वचिस्वपियजादीनां किति ॥ ६।१।१५

वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात् किति । ईजतुः । ईजुः । इयजिथ, इयष्ठ । ईजे । यष्टा ॥

### ५४९. षढोः कः सि ॥ ८।२।४१

यक्ष्यति, यक्ष्यते । इज्यात्, यक्षीष्ट । अयाक्षीत्, अयष्ट ॥ वह्अ प्रापणे ॥ ९ ॥ वहति, वहते । उवाह । ऊहतुः । ऊहुः । उवहिथ ॥

### ५५०. झषस्तथोर्धोऽधः ॥ ८।२।४०

झषः परस्योस्तथोर्धः स्यान्न तु दधातेः ॥

### ५५१. ढो ढे लोपः ॥ ८।३।१३

### ५५२. सहिवहोरोदवर्णस्य ॥ ६।३।११२

अनयोरवर्णस्य ओत्स्याड्ढलोपे । उवोढ । ऊहे । वोढा । वक्ष्यति । अवाक्षीत् । अवोढाम् । अवाक्षुः । अवाक्षीः । अवोढम् । अवोढ । अवाक्षम् । अवाक्ष्व । अवाक्ष्म । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवक्षाथाम् । अवोढ्वम् । अवक्षि । अवक्ष्वहि । अवक्ष्महि ॥

*इति भ्वादयः ॥ १ ॥*

# अथादादयः

**अद** भक्षणे ॥ १ ॥

## ५५३. अदिप्रभृतिभ्यः शपः ॥ २।४।७२

लुक् स्यात् । अत्ति । अत्तः । अदन्ति । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्मः ।

## ५५४. लिट्यन्यतरस्याम् ॥ २।४।४०

अदो घस्लृ वा स्याल्लिटि । जघास । उपधालोपः ॥

## ५५५. शासिवसिघसीनां च ॥ ८।३।६०

इण्कुभ्यां परस्यैषां सस्य षः स्यात् । घस्य चर्त्वम् ॥ जक्षतुः । जक्षुः । जघसिथ । जक्षथुः । जक्ष । जघास, जघस । जक्षिव । जक्षिम । आद । आदतुः । आदुः ॥

## ५५६. इडत्त्यर्तिव्ययतीनाम् ॥ ७।२।६६

अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् । आदिथ । अत्ता । अत्स्यति । अत्तु । अत्तात् । अत्ताम् । अदन्तु ॥

## ५५७. हुझल्भ्यो हेर्धिः ॥ ६।४।१०१

होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि । अत्तात् । अत्तम् । अत्त । अदानि । अदाव । अदाम ॥

## ५५८. अदः सर्वेषाम् ॥ ७।३।१००

अदः परस्यापृक्तसार्वधातुकस्य अट् स्यात्सर्वमतेन । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात् । अद्याताम् । अद्युः । अद्यात् । अद्यास्ताम् । अद्यासुः ॥

## ५५९. लुङ्सनोर्घसॢ ॥ २।४।३७

अदो घसॢ स्याल्लुङि सनि च । ऌदित्वादङ् । अघसत् । आत्स्यत् ॥ हन हिंसागत्योः ॥ २ ॥ हन्ति ॥

## ५६०. अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ॥ ६।४।३७

अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ किति ङिति परे । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः । तनु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः । हतः । घ्नन्ति । हंसि । हथः । हथ । हन्मि । हन्वः । हन्मः । जघान । जघ्नतुः । जघ्नुः ॥

## ५६१. अभ्यासाच्च ॥ ७।३।५५

अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ, जघन्थ । जघ्नथुः । जघ्न । जघ्निव । जघ्निम । हन्ता । हनिष्यति । हन्तु, हतात् । हताम् । घ्नन्तु ॥

## ५६२. हन्तेर्जः ॥ ६।४।३६

हौ परे ॥

## ५६३. असिद्धवदत्राभात् ॥ ६।४।२२

इत उर्ध्वमापादसमाप्तेराभीयम्, समानाश्रये तस्मिन्कर्तव्ये तदसिद्धम् । इति जस्यासिद्धत्वान्न हेर्लुक् । जहि, हतात् । हतम् । हत । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व । अहन्म । हन्यात् । हन्याताम् । हन्युः ॥

## ५६४. आर्धधातुके ॥ २।४।३५

इत्यधिकृत्य ॥

## ५६५. हनो वध लिङि ॥ २।४।४१

## ५६६. लुङि च ॥ २।४।४३

वधादेशोऽदन्तः । अर्धधातुके इति विषयसप्तमी, तेन आर्धधातुकोपदेशे अकारान्तत्वादतो लोपः । वध्यात् । वध्यास्ताम् ।

आदेशस्यानेकाच्त्वादेकाच इतीण्निषेधाभावादिट् । अतो हलादेः- इति वृद्धौ प्राप्तायाम् ---- .

### ५६७. अचः परस्मिन् पूर्वविधौ ॥ १।१।५७

परनिमित्तोऽजादेशः स्थानिवत्, स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इत्यल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । अवधीत् । अहनिष्यत् ॥ यु मिश्रणामिश्रणयोः ॥ ३ ॥

### ५६८. उतो वृद्धिर्लुकि हलि ॥ ७।३।८९

लुग्विषये उतो वृद्धिः पिति हलादौ सार्वधातुके नत्वभ्यस्तस्य । यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । यविता । यविष्यति । यौतु, युतात् । अयौत् । अयुताम् । अयुवन् । युयात् । इह उतो वृद्धिर्न, भाष्ये - **पिच्च ङिन्न ङिच्च पिन्न** इति व्याख्यानात् । युयाताम् । युयुः । यूयात् । यूयास्ताम् । यूयासुः । अयावीत् । अयविष्यत् ॥ या प्रापणे ॥ ४ ॥ याति । यातः । यान्ति । ययौ । याता । यास्यति । यातु । अयात् । अयाताम् ॥

### ५६९. लङः शाकटायनस्यैव ॥ ३।४।१११

आदन्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः, अयान् । यायात् । यायाताम् । यायुः । यायात् । यायास्ताम् । यायासुः । अयासीत् । अयास्यत् । वा गतिगन्धनयोः ॥ ५ ॥ भा दीप्तौ ॥ ६ ॥ ष्णा शौचे ॥ ७

॥ श्रा पाके ॥ ८ ॥ द्रा कुत्सायां गतौ ॥ ९ ॥ प्सा भक्षणे ॥ १० ॥ रा दाने ॥ ११ ॥ ला आदाने ॥ १२ ॥ दाप् लवने ॥ १३ ॥ पा रक्षणे ॥ १४ ॥ ख्या प्रकथने ॥ १५ ॥ अयं सार्वधातुके एव प्रयोक्तव्यः ॥ विद ज्ञाने ॥ १६ ॥

## ५७०. विदो लटो वा ॥ ३।४।८३

वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे -- वेत्ति । वित्तः । विदन्ति ॥

## ५७१. उषविदजागृभ्योऽन्यतरस्याम् ॥ ३।१।३८

एभ्यो लिटि आम्वा स्यात् । विदेरन्तत्वप्रतिज्ञानादामि न गुणः । विदाञ्चकार, विवेद । वेदिता । वेदिष्यति ॥

## ५७२. विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ॥ ३।१।४१

वेत्तेर्लोटि आम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते पुरुषवचने न विवक्षिते ॥

## ५७३. तनादिकृञ्भ्य उः ॥ ३।१।७९

तनादेः कृञश्च उः प्रत्ययः स्यात् । शपोऽपवादः । गुणौ । विदाङ्करोतु ॥

 

## ५७४. अत उत्सार्वधातुके ॥ ६।४।११०

उत्प्रत्ययान्तस्य कृञोऽत उत्सार्वधातुके क्ङिति । विदाङ्कुरुतात् । विदाङ्कुरुताम् । विदाङ्कुर्वन्तु । विदाङ्कुरु । विदाङ्करवाणि । अवेत् । अवित्ताम् । अविदुः ॥

## ५७५. दश्च ॥ ८।२।७५

धातोर्दस्य पदान्तस्य सिपि रुर्वा । अवेः, अवेत् । विद्यात् । विद्याताम् । विद्युः । विद्यात् । विद्यास्ताम् । अवेदीत् । अवेदिष्यत् ॥

अस् भुवि ॥ १७ ॥ अस्ति ॥

## ५७६. श्नसोरल्लोपः ॥ ६।४।१११

श्नस्यास्तेश्चातो लोपः सार्वधातुके क्ङिति । स्तः । सन्ति । असि । स्थः । स्थ । अस्मि । स्वः । स्मः ।

## ५७७. उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ॥ ८।३।८७

उपसर्गेणः प्रादुसश्चास्तेः सस्य षो यकारेऽचि च परे । निष्यात् । प्रनिषन्ति, प्रादुः षन्ति । यच्परः किम् ? । अभिस्तः ॥

## ५७८. अस्तेर्भूः ॥ २।४।५२

आर्धधातुके । बभूव । भविता । भविष्यति । अस्तु, स्तात् । स्ताम् । सन्तु ॥

## ५७९. घ्वसोरेद्धावभ्यासलोपश्च ॥ ६।४।११९

घोरस्तेश्च एत्त्वं स्याद्धौ परे अभ्यासलोपश्च । एत्त्वस्यासिद्धत्वाद्धेर्धिः । श्नसोरित्यल्लोपः । तातङ्पक्षे एत्त्वं न, परेण तातङा बाधात् । एधि, स्तात् । स्तम् । स्त । असानि । असाव । असाम । आसीत् । आस्ताम् । आसन् । स्यात् । स्याताम् । स्युः । भूयात् । अभूत् । अभविष्यत् ॥ इण् गतौ ॥ १८ ॥ एति । इतः ॥

## ५८०. इणो यण् ॥ ६।४।८१

अजादौ प्रत्यये परे । यन्ति ॥

## ५८१. अभ्यासस्यासवर्णे ॥ ६।४।७८

अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि । इयाय ॥

## ५८२. दीर्घ इणः किति ॥ ७।४।६९

&न्ब्स्प्ं‌ि‌णोऽभ्यासस्य दीर्घः स्यात् किति लिटि । ईयतुः । ईयुः । इययिथ, इयेथ । एता । एष्यति । एतु । ऐत् । ऐताम् । आयन् । इयात् ॥

## ५८३. एतेर्लिङि ॥ ७।४।२४

उपसर्गात्परस्य इणोऽणो ह्रस्व आर्धधातुके किति लिङि । निरियात् । उभयत आश्रयणे नान्तादिवत् । अभीयात् । अणः किम् ? समेयात् ॥

## ५८४. इणो गा लुङि ॥ २।४।४५

गातिस्थेति सिचो लुक् । अगात् । ऐष्यत् ॥ शीङ् स्वप्ने ॥ १९ ॥

## ५८५. शीङः सार्वधातुके गुणः ॥ ७।४।२१

क्क्ङिति चेत्यस्यापवादः । शेते । शयाते ॥

## ५८६. शीङो रुट् ॥ ७।१।६

शीङः परस्य झादेशस्यातो रुडागमः स्यात् । शेरते । शेषे । शयाथे । शेध्वे । शये । शेवहे । शेमहे । शिश्ये । शिश्याते । शिश्यिरे । शयिता । शयिष्यते । शेताम् । शयाताम् । अशेत । अशयाताम् । अशेरत । शयीत । शयीयाताम् । शयीरन् । शयिषीष्ट । अशयिष्ट । अशयिष्यत ॥ इङ् अध्ययने ॥ २० ॥ इङिकावध्युपसर्गतो न व्यभिचारतः । अधीते । अधीयाते । अधीयते ॥

## ५८७. गाङ् लिटि ॥ २।४।४९

इङो गाङ् स्याल्लिटि । अधिजगे । अधिजगाते । अधिजगिरे । अध्येता । अध्येष्यते । अधीताम् । अधीयाताम् । अधीयताम् ।

अधीष्व । अधीयाथाम् । अधीध्वम् । अध्ययै । अध्ययावहै । अध्ययामहै । अध्यैत । अध्यैयाताम् । अध्यैयत । अध्यैथाः । अध्यैयाथाम् । अध्यैध्वम् । अध्यैयि । अध्यैवहि । अध्यैमहि । अधीयीत । अधीयीयाताम् । अधीयीरन् । अध्येषीष्ट ॥

### ५८८. विभाषा लुङ्लृङोः ॥ २।४।५०

इङो गाङ् वा स्यात् ॥

### ५८९. गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥ १।२।१

गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः ॥

### ५९०. घुमास्थागापाजहातिसां हलि ॥ ६।४।६६

एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके । अध्यगीष्ट, अध्यैष्ट । अध्यगीष्यत, अध्यैष्यत ॥ दुह प्रपूरणे ॥ २१ ॥ दोग्धि । दुग्धः । दुहन्ति । धोक्षि । दुग्धे । दुहाते । दुहते । धुक्षे । दुहाथे । धुग्ध्वे । दुहे । दुह्वहे । दुह्महे । दुदोह, दुदुहे । दोग्धासि, दोग्धासे । धोक्ष्यति, धोक्ष्यते । दोग्धु, दुग्धात् । दुग्धाम् । दुहन्तु । दुग्धि, दुग्धात् । दुग्धम् । दुग्ध । दोहानि । दोहाव । दोहाम । दुग्धाम् । दुहाताम् । दुहताम् । धुक्ष्व । दुहाथाम् । धुग्ध्वम् । दोहै । दोहावहै । दोहामहै । अधोक् । अदुग्धाम् । अदुहन् । अदोहम् । अदुग्ध । अदुहाताम् । अदुहत । अधुग्ध्वम् । दुह्यात्, दुहीत ॥

## ५९१. लिङ्सिचावात्मनेपदेषु ॥ १।२।११

इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । धुक्षीष्ट ॥

## ५९२. शल इगुपधादनिटः क्सः ॥ ३।१।४५

इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् । अधुक्षत् ॥

## ५९३. लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥ ७।३।७३

एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । अदुग्ध, अधुक्षत ॥

## ५९४. क्सस्याचि ॥ ७।३।७२

&न्ब्स्प्ंजादौ तङि क्सस्य लोपः । अधुक्षाताम् । अधुक्षन्त । अदुग्धाः, अधुक्षथाः । अधुक्षाथाम् । अधुग्ध्वम्, अधुक्षध्वम् । अधुक्षि । अदुह्वहि, अधुक्षावहि । अधुक्षामहि । अधोक्ष्यत ॥ एवं दिह उपचये ॥ २२ ॥ लिह आस्वादने ॥ २३ ॥ लेढि । लीढः । लिहन्ति । लेक्षि । लीढे । लिहाते । लिहते । लिक्षे । लिहाथे । लीढ्वे । लिलेह, लिलिहे । लेढासि, लेढासे । लेक्ष्यति, लेक्ष्यते । लेढु । लीढाम् । लिहन्तु । लीढि । लेहानि । लीढाम् । अलेट्, अलेड् । अलिक्षत्, अलीढ, अलिक्षत । अलेक्ष्यत्, अलेक्ष्यत ॥ ब्रूञ् व्यक्तायां वाचि ॥ २४ ॥

## ५९५. ब्रुवः पञ्चानामादित आहो ब्रुवः ॥ ३।४।८४

ब्रुवो लटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः। आह। आहतुः। आहुः॥

## ५९६. आहस्थः ॥ ८।२।३५

झलि परे। चर्त्वम्। आत्थ। आहथुः॥

## ५९७. ब्रुव ईट् ॥ ७।३।९३

ब्रुवः परस्य हलादेः पित ईट् स्यात्। ब्रवीति। ब्रूतः। ब्रुवन्ति। ब्रूते। ब्रुवाते। ब्रुवते॥

## ५९८. ब्रुवो वचिः ॥ २।४।५३

आर्धधातुके। उवाच। ऊचतुः। ऊचुः। उवचिथ, उवक्थ। ऊचे। वक्तासि, वक्तासे। वक्ष्यति, वक्ष्यते। ब्रवीतु, ब्रूतात्। ब्रुवन्तु। ब्रूहि। ब्रवाणि। ब्रूताम्। ब्रवै। अब्रवीत्, अब्रूत। ब्रूयात्, ब्रुवीत। उच्यात्, वक्षीष्ट॥

## ५९९. अस्यतिवक्तिख्यातिभ्योऽङ् ॥ ३।१।५२

एभ्यश्च्लेरङ् स्यात्॥

## ६००. वच उम् ॥ ७।४।२०

अङि परे। अवोचत्, अवोचत। अवक्ष्यत्, अवक्ष्यत। (ग. सू.) **चर्करीतं च**। चर्करीतमिति यङ्लुगन्तस्य संज्ञा, तददादौ बोध्यम्॥

ऊर्णुञ् आच्छादने॥ २५॥

## ६०१. ऊर्णोतेर्विभाषा॥ ७।३।९०

वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके। ऊर्णौति, ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। ऊर्णुते। ऊर्णुवाते। ऊर्णुवते। (***ऊर्णोतेराम्नेति वाच्यम्***) ॥

## ६०२. न न्द्राः संयोगादयः॥ ६।१।३

अचः पराः संयोगादयो नदरा द्विर्न भवन्ति। नुशब्दस्य द्वित्वम्। ऊर्णुनाव। ऊर्णुनुवतुः। ऊर्णुनुवुः॥

## ६०३. विभाषोर्णोः॥ १।२।३

इडादिप्रत्ययो वा ङित्स्यात्। ऊर्णुनुविथ, ऊर्णुनविथ। ऊर्णुविता, ऊर्णविता। ऊर्णुविष्यति, ऊर्णविष्यति। ऊर्णौतु, ऊर्णोतु। ऊर्णवानि। ऊर्णवै॥

## ६०४. गुणोऽपृक्ते॥ ७।३।९१

ऊर्णोतेर्गुणोऽपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः । और्णोतु । और्णोः । ऊर्णुयात् । ऊर्णुयाः । ऊर्णुवीत । ऊर्णूयात् । ऊर्णुविषीष्ट, ऊर्णविषीष्ट ॥

**६०५. ऊर्णोतेर्विभाषा ॥ ७।१।६**

इडादौ सिचि वा वृद्धिः परस्मैपदे परे । पक्षे गुणः । और्णावीत्, और्णुवीत्, और्णवीत् । और्णाविष्टाम्, और्णुविष्टाम्, और्णविष्टाम् । और्णुविष्ट, और्णविष्ट । और्णुविष्यत्, और्णविष्यत् । और्णुविष्यत, और्णविष्यत ॥

*इत्यदादयः ॥ २ ॥*

# अथ जुहोत्यादयः

हु दानादनयोः ॥ १ ॥

**६०६. जुहोत्यादिभ्यः श्लुः ॥ २।४।७५**

शपः श्लुः स्यात् ॥

**६०७. श्लौ ॥ ६।१।१०**

धातोर्द्वे स्तः । जुहोति । जुहुतः ।

## ६०८. अदभ्यस्तात् ॥ ७।१।४

झस्यात्स्यात् । हुश्नुवोरिति यण् । जुह्वति ॥

## ६०९. भीह्रीभृहुवां श्लुवच्च ॥ ३।१।३९

एभ्यो लिटि आम् वा स्यादामि श्लाविव कार्यं च । जुहवाञ्चकार, जुहाव । होता । होष्यति । जुहोतु, जुहुतात् । जुहुताम् । जुह्वतु । जुहुधि । जुहवानि । अजुहोत् । अजुहुताम् ॥

## ६१०. जुसि च ॥ ७।३।८३

इगन्ताङ्गस्य गुणोऽजादौ जुसि । अजुहवुः । जुहुयात् । हूयात् । अहौषीत् । अहोष्यत् ॥ ञिभी भये ॥ २ ॥ बिभेति ॥

## ६११. भियोऽन्यतरस्याम् ॥ ६।४।११५

इकारो वा स्याद्धलादौ क्ङिति सार्वधातुके । बिभितः, बिभीतः । बिभ्यति । बिभयाञ्चकार, बिभाय । भेता । भेष्यति । बिभेतु, बिभितात्, बिभीतात् । अबिभेत् । बिभीयात् । भीयात् । अभैषीत् । अभेष्यत् ॥ ह्री लज्जायाम् ॥ ३ ॥ जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रयाञ्चकार, जिह्राय । ह्रेता । ह्रेष्यति । जिह्रेतु । अजिह्रेत् । जिह्रियात् । ह्रीयात् । अह्रैषीत् । अह्रेष्यत् ॥ पॄ पालन पूरणयोः ॥ ४ ॥

## ६१२. अर्तिपिपर्त्योश्च ॥ ७।४।७७

अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ। पिपर्ति॥

**६१३. उदोष्ठ्यपूर्वस्य॥ ७।१।१०२**

अङ्गावयवौष्ठ्यपूर्वो य ऋत् तदन्तस्याङ्गस्य उत् स्यात्॥

**६१४. हलि च॥ ८।२।७७**

रेफवान्तस्य धातेरुपधाया इको दीर्घो हलि। पिपूर्तः। पिपुरति। पपार॥

**६१५. शॄद्दॄप्रां ह्रस्वो वा॥ ७।४।१२**

एषां लिटि ह्रस्वो वा स्यात्। पप्रतुः॥

**६१६. ऋच्छत्यॄताम्॥ ७।४।११**

तौदादिक ऋच्छेर् ऋधातोर् ॠतां च गुणो लिटि। पपरतुः। पपरुः॥

**६१७. वॄतो वा॥ ७।२।३८**

वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि। परिता, परीता। परीष्यति, परिष्यति। पिपर्तु। अपिपः। अपिपूर्ताम्। अपिपरुः। पिपूर्यात्। पूर्यात्। अपारीत्॥

**६१८. सिचि च परस्मैपदेषु॥ ७।२।४०**

अत्र इटो न दीर्घः । अपारिष्टाम् । अपरिष्यत्, अपरीष्यत् ॥ ओहाक् त्यागे ॥ ५ ॥ जहाति ॥

### ६१९. जहातेश्च ॥ ६।४।११६

इद्वा स्याद्धलादौ क्ङिति सार्वधातुके । जहितः ॥

### ६२०. ई हल्यघोः ॥ ६।४।११३

श्नाभ्यस्तयोरात ईत् स्यात् सार्वधातुके क्ङिति हलादौ न तु घोः । जहीतः ॥

### ६२१. श्नाभ्यस्तयोरातः ॥ ६।४।११२

अनयोरातो लोपः क्ङिति सार्वधातुके । जहति । जहौ । हाता । हास्यति । जहातु, जहितात्, जहीतात् ॥

### ६२२. आ च हौ ॥ ६।४।११७

जहातेर्हौ परे आ स्याच्चादिदीतौ । जहाहि, जहिहि, जहीहि । अजहात् । अजहुः ॥

### ६२३. लोपो यि ॥ ६।४।११८

जहातेरालोपो यादौ सार्वधातुके । जह्यात् । एर्लिङि । हेयात् । अहासीत् । अहास्यत् ॥ माङ् माने शब्दे च ॥ ६ ॥

### ६२४. भृञामित् ॥ ७।४।७६

भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ । मिमीते । मिमाते । मिमते । ममे । माता । मास्यते । मिमीताम् । अमिमीत । मिमीत । मासीष्ट । अमास्त । अमास्यत ॥ ओहाङ् गतौ ॥ ७ ॥ जिहीते । जिहाते । जिहते । जहे । हाता । हास्यते । जिहीताम् । अजिहीत । जिहीत । हासीष्ट । अहास्त । अहास्यत ॥ डु भृञ् धारणपोषणयोः ॥ ८ ॥ बिभर्ति । बिभृतः । बिभ्रति । बिभृते । बिभ्राते । बिभ्रते । विभराञ्चकार, बभार । बभर्थ । बभृव । बिभराञ्चक्रे, बभ्रे । भर्तासि, भर्तासे । भरिष्यति, भरिष्यते । बिभर्तु । बिभराणि । बिभृताम् । अबिभः । अबिभृताम् । अबिभरुः । अबिभृत । बिभृयात्, बिभ्रीत । भ्रियात्, भृषीष्ट । अभार्षीत्, अभृत । अभरिष्यत्, अभरिष्यत ॥ डु दाञ् दाने ॥ ९ ॥ ददाति । दत्तः । ददति । दत्ते । ददाते । ददते । ददौ, ददे । दातासि, दातासे । दास्यति, दास्यते । ददातु ॥

## ६२५. दाधा घ्वदाप् ॥ १।१।२०

दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना । घ्वसोरित्येत्त्वम् । देहि । दत्तम् । अददात्, अदत्त । दद्यात्, ददीत । देयात्, दासीष्ट । अदात् । अदाताम् । अदुः ॥

## ६२६. स्थाघ्वोरिच्च ॥ १।२।१७

अनयोरिदन्तादेशः सिच्च कित्स्यादात्मनेपदे । अदित । अदास्यत्, अदास्यत ॥ डु धाञ् धारणपोषणयोः ॥ १० ॥ दधाति ॥

## ६२७. दधस्तथोश्च ॥ ८।२।३८

द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तयोः स्ध्वोश्च परतः । धत्तः । दधति । दधासि । धत्थः । धत्थ । धत्ते । दधाते । दधते । धत्से । धद्ध्वे । घ्वसोरेद्धावभ्यास लोपश्च । धेहि । अदधात्, अधत्त । दध्यात्, दधीत । धेयात्, धासीष्ट । अधात्, अधित । अधास्यत् । अधास्यत ॥ णिजिर् शौचपोषणयोः ॥ ११ ॥ ***(इर इत्संज्ञा वाच्या)*** ॥

## ६२८. णिजां त्रयाणां गुणः श्लौ ॥ ७।४।५७

णिज्विज्विषामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति । नेनिक्तः । नेनिजति । नेनिक्ते । निनेज, निनिजे । नेक्ता । नेक्ष्यति, नेक्ष्यते । नेनेक्तु । नेनिग्धि ॥

## ६२९. नाभ्यस्तस्याचि पिति सार्वधातुके ॥ ७।३।८७

लघूपधगुणो न स्यात् । नेनिजानि । नेनिक्ताम् । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । अनेनिजम् । अनेनिक्त । नेनिज्यात् । नेनिजीत । निज्यात्, निक्षीष्ट ॥

## ६३०. इरितो वा ॥ ३।२।५७

इरितो धातोश्च्लेरङ् वा परस्मै पदेषु । अनिजत्, अनैक्षीत्, अनिक्त । अनेक्ष्यत्, अनेक्ष्यत ॥

*इति जुहोत्यादयः ॥ ३ ॥*

# अथ दिवादयः

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ॥ १ ॥

## ६३१. दिवादिभ्यः श्यन् ॥ ३।१।६९

शपोऽपवादः । हलि चेति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् ॥ एवं षिवु तन्तुसन्ताने ॥ २ ॥ नृती गात्रविक्षेपे ॥ ३ ॥ नृत्यति । ननर्त । नर्तिता ॥

## ६३२. सेऽसिचि कृतचृतच्छृदतृदनृतः ॥ ७।२।५७

एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड्वा । नर्तिष्यति, नर्त्स्यति । नृत्यतु । अनृत्यत् । नृत्येत् । नृत्यात् । अनर्तीत् । अनर्तिष्यत्, अनर्त्स्यत् ॥ त्रसी उद्वेगे ॥ ४ ॥ वा भ्राशेति श्यन्वा । त्रस्यति, त्रसति । तत्रास ॥

## ६३३. वा जॄभ्रमुत्रसाम् ॥ ६।४।१२४

एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा । त्रेसतुः, तत्रसतुः । त्रेसिथ, तत्रसिथ । त्रसिता ॥ शो तनूकरणे ॥ ५ ॥

## ६३४. ओतः श्यनि ॥ ७।३।७१

लोपः स्यात् । श्यति । श्यतः । श्यन्ति । शशौ । शशतुः । शाता । शास्यति ॥

## ६३५. विभाषा घ्राधेट्शाच्छासः ॥ २।४।७८

एभ्यस्सिचो लुग्वा स्यात्परस्मैपदे परे । अशात् । अशाताम् । अशुः । इट्सकौ । अशासीत् । अशासिष्टाम् ॥ छो छेदने ॥ ६ ॥ छ्यति ॥ षोऽन्तकर्मणि ॥ ७ ॥ स्यति । ससौ ॥ दोऽवखण्डने ॥ ८ ॥ द्यति । ददौ । देयात् । अदात् ॥ व्यध ताडने ॥ ९ ॥

## ६३६. ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ॥ ६।१।१६

एषां सम्प्रसारणं स्यात्किति ङिति च । विध्यति । विव्याध । विविधतुः । विविधुः । विव्यधिथ, विव्यद्ध । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् ॥ पुष पुष्टौ ॥ १० ॥ पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । पुषादीत्यङ् । अपुषत् ॥ शुष शोषणे ॥

 

११ ॥ शुष्यति । शुशोष । अशुषत् ॥ णश अदर्शने ॥ १२ ॥ नश्यति । ननाश । नेशतुः ॥

## ६३७. रधादिभ्यश्च ॥ ७।२।४५

रध् नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात् । नेशिथ ॥

## ६३८. मस्जिनशोर्झलि ॥ ७।१।६०

नुम् स्यात् । ननंष्ठ । नेशिव, नेश्व । नेशिम, नेश्म । नशिता, नंष्टा । नशिष्यति, नङ्क्ष्यति । नश्यतु । अनश्यत् । नश्येत् । नश्यात् । अनशत् ॥ षूङ् प्राणिप्रसवे ॥ १३ ॥ सूयते । सुषुवे । क्रादिनियमादिट् । सुषुविषे । सुषुविवहे । सुषुविमहे । सविता सोता ॥ दूङ् परितापे ॥ १४ ॥ दूयते ॥ दीङ् क्षये ॥ १५ ॥ दीयते ॥

## ६३९. दीङो युडचि क्ङिति ॥ ६।४।६३

दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् । (***वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ***) । दिदीये ॥

## ६४०. मीनातिमिनोतिदीङां ल्यपि च ॥ ६।१।५०

एषामात्वं स्याल्ल्यपि चादशित्येज्निमित्ते । दाता । दास्यति । (स्थाघ्वोरित्त्वे दीङः प्रतिषेधः) । अदास्त ॥ डीङ् विहायसा गतौ ॥

१६ ॥ डीयते । डिड्ये । डयिता ॥ पीङ् पाने ॥ १७ ॥ पीयते । पेता । अपेष्ट ॥ माङ् माने ॥ १८ ॥ मायते । ममे ॥ जनी प्रादुर्भावे ॥ १९ ॥

## ६४१. ज्ञाजनोर्जा ॥ ७।३।७९

अनयोर्जादेशः स्याच्छिति । जायते । जज्ञे । जनिता । जनिष्यते ॥

## ६४२. दीपजनबुधपूरितायिप्यायिभ्योऽन्यरतस्याम् ॥ ३।१।६१

एभ्यश्च्लेश्चिण् वा स्यादेकवचने तशब्दे परे ॥

## ६४३. चिणो लुक् ॥ ६।४।१०४

चिणः परस्य लुक् स्यात् ॥

## ६४४. जनिवध्योश्च ॥ ७।३।३५

अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अजनि, अजनिष्ट ॥ दीपी दीप्तौ ॥ २०// दीप्यते । दिदीपे । अदीपि, अदीपिष्ट ॥ पद गतौ ॥ २१ ॥ पद्यते । पेदे । पत्ता । पत्सीष्ट ॥

## ६४५. चिण् ते पदः ॥ ३।१।६०

पदश्च्लेश्चिण् स्यात्तशब्दे परे । अपादि । अपत्साताम् । अपत्सत ॥ विद सत्तायाम् ॥ २२ ॥ विद्यते । वेत्ता । अवित्त ॥ बुध अवगमने ॥ २३ ॥ बुध्यते । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि, अबुद्ध ।

अभुत्साताम् ॥ युध संप्रहारे ॥ २४ ॥ युध्यते । युयुधे । योद्धा । अयुद्ध ॥ सृज विसर्गे ॥ २५ ॥ सृज्यते । ससृजे । ससृजिषे ॥

### ६४६. सृजिदृशोर्झल्यमकिति ॥ ६।१।५८

अनयोरमागमः स्याज्झलादावकिति । स्रष्टा । स्रक्ष्यति । सृक्षीष्ट । असृष्ट । असृक्षाताम् ॥ मृष तितिक्षायाम् ॥ २६ ॥ मृष्यति, मृष्यते ॥ ममर्ष । ममर्षिथ । ममृषिषे । मर्षितासि । मर्षिष्यति, मर्षिष्यते ॥ णह बन्धने ॥ २७ ॥ नह्यति, नह्यते । ननाह । नेहिथ, ननद्ध । नेहे । नद्धा । नत्स्यति । अनात्सीत्, अनद्ध ॥

*इति दिवादयः ॥ ४ ॥*

## अथ स्वादयः

षुञ् अभिषवे ॥ १ ॥

### ६४७. स्वादिभ्यः श्नुः ॥ ३।१।७३

शपोऽपवादः । सुनोति । सुनुतः । हुश्नुवोरिति यण् । सुन्वन्ति । सुन्वः, सुनुवः । सुनुते । सुन्वाते । सुन्वते । सुन्वहे, सुनुवहे । सुषाव, सुषुवे । सोता । सुनु । सुनवानि । सुनवै । सुनुयात् । सूयात् ॥

### ६४८. स्तुसुधूञ्भ्यः परस्मैपदेषु ॥ ७।२।७२

एभ्यस्सिच इट् स्यात्परस्मैपदेषु। असावीत्, असोष्ट॥ चिञ् चयने ॥ २ ॥ चिनोति, चिनुते॥

## ६४९. विभाषा चेः ॥ ७।३।५८

अभ्यासात्परस्य कुत्वं वा स्यात्सनि लिटि च। चिकाय, चिचाय चिक्ये, चिच्ये। अचैषीत्, अचेष्ट॥ स्तृञ् आच्छादने॥ ३॥ स्तृणोति, स्तृणुते॥

## ६५०. शर्पूर्वाः खयः ॥ ७।४।६१

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्तेऽन्ये हलो लुप्यन्ते। तस्तार। तस्तरतुः। तस्तरे। गुणोऽर्तीति गुणः। स्तर्यात्॥

## ६५१. ऋतश्च संयोगादेः ॥ ७।२।४३

ऋदन्तात्संयोगादेः परयोः लिङ्सिचोरिड्वा स्यात्तङि। स्तरिषीष्ट, स्तृषीष्ट। अस्तरिष्ट, अस्तृत॥ धूञ् कम्पने॥ ४॥ धूनोति, धूनुते। दुधाव। स्वरतीति वेट्। दुधविथ, दुधोथ॥

## ६५२. श्र्युकः किति ॥ ७।२।११

श्रिञ एकाच उगन्ताच्च गित्कितोरिण् न। परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेध काण्डारम्भ सामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। दुधुविव। दुधुवे। अधावीत्,

अधविष्ट, अधोष्ट । अधविष्यत्, अधोष्यत् । अधविष्यताम्, अधोष्यताम् । अधविष्यत, अधोष्यत ॥

*इति स्वादयः ॥ ५ ॥*

# अथ तुदादयः

तुद व्यथने ॥ १ ॥

### ६५३. तुदादिभ्यः शः ॥ ३।१।७७

शपोऽपवादः । तुदति, तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत्, अतुत ॥ णुद प्रेरणे ॥ २ ॥ नुदति, नुदते । नुनोद । नोत्ता । भ्रस्ज पाके ॥ ३ ॥ ग्रहिज्येति सम्प्रसारणम् । सस्य श्चुत्वेन शः । शस्य जश्त्वेन जः । भृज्जति, भृज्जते ॥

### ६५४. भ्रस्जो रोपधयो रमन्यतरस्याम् ॥ ६।४।४७

भ्रस्जो रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । मित्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभर्जतुः । बभर्जिथ, बभर्ष्ठ । बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । स्कोरिति सलोपः । व्रश्चेति षः । बभ्रष्ठ । बभर्जे, बभ्रज्जे । भर्ष्टा, भ्रष्टा । भर्क्ष्यति, भ्रक्ष्यति । क्ङिति रमागमं बाधित्वा सम्प्रसारणं

पूर्वविप्रतिषेधेन । भृज्ज्यात् । भृज्ज्यास्ताम् । भृज्ज्यासुः । भर्क्षीष्ट, भ्रक्षीष्ट । अभार्क्षीत्, अभ्राक्षीत् । अभर्ष्ट, अभ्रष्ट ॥ कृष विलेखने ॥ ४ ॥ कृषति कृषते । चकर्ष, चकृषे ॥

### ६५५. अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ॥ ६।१।५९

उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति । क्रष्टा, कर्ष्टा । कृक्षीष्ट । *(स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वक्तव्यः)* । अक्राक्षीत्, अकार्क्षीत्, अकृक्षत् । अकृष्ट । अकृक्षाताम् । अकृक्षत । क्सपक्षे अकृक्षत । अकृक्षाताम् । अकृक्षन्त ॥ मिल संगमे ॥ ५ ॥ मिलति, मिलते, मिमेल । मेलिता । अमेलीत् ॥ मुच्लृ मोचने ॥ ६ ॥

### ६५६. शे मुचादीनाम् ॥ ७।१।५९

मुच् लिप् विद् लुप् सिच् कृत् खिद् पिशां नुम् स्यात् शे परे । मुञ्चति, मुञ्चते । मोक्ता । मुच्यात् । मुक्षीष्ट । अमुचत्, अमुक्त । अमुक्षाताम् । लुप्लृ छेदने ॥ ७ ॥ लुम्पति, लुम्पते । लोप्ता । अलुपत् । अलुप्त । विद्लृ लाभे ॥ ८ ॥ विन्दति, विन्दते । विवेद, विवेदे । व्याघ्रभूतिमते सेट् । वेदिता । भाष्यमतेऽनिट् । परिवेत्ता ॥ षिच क्षरणे ॥ ९ ॥ सिञ्चति, सिञ्चते ॥

### ६५७. लिपिसिचिह्वश्च ॥ ३।१।५३

एभ्यश्च्लेरङ् स्यात् । असिचत् ॥

 

## ६५८. आत्मनेपदेष्वन्यतरस्याम् ॥ ३।१।५४

लिपिसिचिह्वः परस्य च्लेरङ् वा । असिचत, असिक्त ॥ लिप उपदेहे ॥ १० ॥ उपदेहो वृद्धिः । लिम्पति, लिम्पते । लेप्ता । अलिपत्, अलिपत, अलिप्त//

*इत्युभयपदिनः ।*

कृती छेदने ॥ ११ ॥ कृन्तति । चकर्त । कर्तिता । कर्तिष्यति, कर्त्स्यति । अकर्तीत् ॥ खिद परिघाते ॥ १२ ॥ खिन्दति । चिखेद । खेत्ता ॥ पिश अवयवे ॥ १३ ॥ पिंशति । पेशिता ॥ ओव्रश्चू छेदने ॥ १४ ॥ वृश्चति । वव्रश्च । वव्रश्चिथ, वव्रष्ठ । व्रश्चिता, व्रष्टा । व्रश्चिष्यति, व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत्, अव्राक्षीत् ॥ व्यच व्याजीकरणे ॥ १५ ॥ विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत्, अव्यचीत् । व्यचेः कुटादित्वमनसीति तु नेह प्रवर्तते, अनसीति पर्युदासेन कृन्मात्रविषयत्वात् ॥ उछि उञ्छे ॥ १६ ॥ उञ्छति । **उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्** । इति यादवः ॥ ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु ॥ १७ ॥ ऋच्छति । ऋच्छत्यॄतामिति गुणः । द्विहल् ग्रहणस्य अनेक हलुपसक्षणत्वान्नुट् ।

आनर्च्छ । आनर्च्छतुः । ऋच्छिता ॥ उज्झ उत्सर्गे ॥ १८ ॥ उज्झति ॥ लुभ विमोहने ॥ १९ ॥ लुभति ॥

### ६५९. तीषसहलुभरुषरिषः ॥ ७।२।४८

इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात् । लोभिता, लोब्धा । लोभिष्यति ॥ तृप तृम्फ तृप्तौ ॥ २०-२१ ॥ तृपति । ततर्प । तर्पिता । अतर्पीत् । तृम्फति । ***(शे तृम्फादीनां नुम् वाच्यः)*** । आदिशब्दः प्रकारे, तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । ततृम्फ । तृफ्यात् ॥ मृड पृड सुखने ॥ २२-२३ ॥ मृडति । पृडति । शुन गतौ ॥ २४ ॥ शुनति ॥ इषु इच्छायाम् ॥ २५ ॥ इच्छति । एषिता, एष्टा । एषिष्यति । इष्यात् । ऐषीत् ॥ कुट कौटिल्ये ॥ २६ ॥ गाङ्कुटादीति ङित्त्वम् ॥ चुकुटिथ । चुकोट, चुकुट । कुटिता ॥ पुट संश्लेषणे ॥ २७ ॥ पुटति । पुटिता । स्फुट विकसने ॥ २८ ॥ स्पुटति । स्पुटिता ॥ स्फुर स्फुल संचलने ॥ २९-३० ॥ स्फुरति । स्फुलति ॥

### ६६०. स्फुरतिस्फुलत्योर्निर्निविभ्यः ॥ ८।३।७६

षत्वं वा स्यात् । निःष्फुरति, निःस्फुरति । णू स्तवने ॥ ३१ ॥ परिणूतगुणोदयः । नुवति । नुनाव । नुविता ॥ टुमस्जो शुद्धौ ॥ ३२ ॥ मज्जति । ममज्ज । ममज्जिथ । मस्जिनशोरिति नुम् । ***(मस्जेरन्त्यात्पूर्वो नुम्वाच्यः)*** । संयेगादिलोपः । ममङ्क्थ । मङ्क्ता

। मङ्क्ष्यति । अमाङ्क्षीत् । अमाङ्क्ताम् । अमाङ्क्षुः ॥ रुजो भङ्गे ॥ ३३ ॥ रुजति । रोक्ता । रोक्ष्यति । अरौक्षीत् ॥ भुजो कौटिल्ये ॥ ३४ ॥ रुजिवत् ॥ विश प्रवेशने ॥ ३५ ॥ विशति ॥ मृश आमर्शने ॥ ३६ ॥ आमर्शनं स्पर्शः ॥ अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ॥ अम्राक्षीत्, अमार्क्षीत्, अमृक्षत् ॥ षद्लृ विशरणगत्यवसादनेषु ॥ ३७ ॥ सीदतीत्यादि ॥ शद्लृ शातने ॥ ३८ ॥

## ६६१. शदेः शितः ॥ १।३।६०

शिद्भाविनोऽस्मात्तङानौ स्तः । शीयते । शीयताम् । अशीयत । शीयेत । शशाद । शत्ता । शत्स्यति । अशदत् । अशत्स्यत् ॥ कॄ विक्षेपे ॥ ३९ ॥

## ६६२. ऋत इद्धातोः ॥ ७।१।१००

ऋदन्तस्य धातोरङ्गस्य इत्स्यात् । किरति । चकार । चकरतुः । चकरुः । करीता, करिता । कीर्यात् ॥

## ६६३. किरतौ लवने ॥ ६।१।१४०

उपात्किरतेः सुट् छेदने/ उपस्किरति । (***अडभ्यासव्यवायेऽपि सुट्कात् पूर्व इति वक्तव्यम्***) । उपास्किरत् । उपचस्कार ॥

## ६६४. हिंसायां प्रतेश्च ॥ ६।१।१४१

उपात्प्रतेश्च किरतेः सुट् स्यात् हिंसायाम् । उपस्किरति । प्रतिस्किरति ॥ गॄ निगरणे ॥ ४० ॥

## ६६५. अचि विभाषा ॥ ८।२।२१

गिरते रेफस्य लो वाजादौ प्रत्यये । गिरति, गिलति । जगार, जगाल । जगरिथ, जगलिथ । गरीता, गरिता, गलीता, गलिता ॥ प्रच्छ ज्ञीप्सायाम् ॥ ४२ ॥ ग्रहिज्येति सम्प्रसारणम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् ॥ मृङ् प्राणत्यागे ॥ ४२ ॥

## ६६६. म्रियतेर्लुङ्लिङोश्च ॥ १।३।६१

लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र । रिङ् । इयङ् । म्रियते । ममार । मर्ता । मरिष्यति । मृषीष्ट । अमृत ॥ पृङ् व्यायामे ॥ ४३ ॥ प्रायेणायं व्याङ्पूर्वः । व्याप्रियते । व्यापप्रे । व्यापप्राते । व्यापरिष्यते । व्यापृत । व्यापृषाताम् ॥ जुषी प्रीतिसेवनयोः ॥ ४४ ॥ जुषते । जुजुषे ॥ ओविजी भयचलनयोः ॥ ४५ ॥ प्रायेणायमुत्पूर्वः । उद्विजते ॥

## ६६७. विज इट् ॥ १।२।२

विजेः पर इडादिप्रत्ययो ङिद्वत् । उद्विजिता ॥

*इति तुदादयः ॥ ६ ॥*

# अथ रुधादयः

रुधिर् आवरणे ॥ १ ॥

## ६६८. रुधादिभ्यः श्नम् ॥ ३।१।७८

शपोऽपवादः । रुणद्धि । श्नसोरल्लोपः । रुन्धः । रुन्धन्ति । रुणत्सि । रुन्धः । रुन्ध । रुणध्मि । रुन्ध्वः । रुन्ध्मः । रुन्धे । रुन्धाते । रुन्धते । रुन्त्से । रुन्धाथे । रुन्ध्वे । रुन्धे । रुन्ध्वहे । रुन्ध्महे । रुरोध, रुरुधे । रोद्धासि, रोद्धासे । रोत्स्यसि, रोत्स्यसे । रोत्स्यति, रोत्स्यते । रुणद्धु, रुन्धात् । रुन्धाम् । रुन्धन्तु । रुन्धि । रुणधानि । रुणधाव । रुणधाम । रुन्धाम् । रुन्धाताम् । रुन्धताम् । रुन्त्स्व । रुणधै । रुणधावहै । रुणधामहै । अरुणत्, अरुणद् । अरुन्धताम् । अरुन्धन् । अरुणः, अरुणत्, अरुणद् । अरुन्ध । अरुन्धाताम् । अरुन्धत । अरुन्धाः । रुन्ध्यात् । रुन्धीत । रुध्यात्, रुत्सीष्ट । अरुधत्, अरौत्सीत् । अरुद्ध । अरुत्साताम् । अरुत्सत । अरोत्स्यत्, अरौत्सीत् । अरुद्ध । अरुत्साताम् । अरुत्सत । अरोत्स्यत्, अरोत्स्यत ॥ भिदिर् विदारणे ॥ २ ॥ छिदिर् द्वैधीकरणे ॥ ३ ॥ युजिर् योगे ॥ ४ ॥ रिचिर् विरेचने ॥ ५ ॥ रिणक्ति, रिङ्क्ते । रिरेच । रेक्ता रेक्ष्यति अरिणक् । अरिचत्, अरैक्षीत्, अरिक्त ॥ विचिर् पृथग्भावे ॥ ६ ॥ विनक्ति विङ्क्ते ॥ क्षुदिर्

संपेषणे ॥ ७ ॥ क्षुणत्ति, क्षुन्ते । क्षोत्ता ॥ अक्षुदत्, अक्षौत्सीत्, अक्षुत्त । उच्छृदिर् दीप्तिदेवनयोः ॥ ८ ॥ छृणत्ति छृन्ते । चच्छर्द । सेऽसिचीति वेट् । चच्छृदिषे, चच्छृत्से । छर्दिता । छर्दिष्यति, छर्त्स्यति । अच्छृदत्, अच्छर्दीत्, अच्छर्दिष्ट ॥ उत्तृदिर् हिंसानादरयोः ॥ ९ ॥ तृणत्ति, तृन्ते ॥ कृती वेष्टने ॥ १० ॥ कृणत्ति ॥ तृह हिसि हिंसायाम् ॥ ११-१२//

### ६६९. तृणह इम् ॥ ७।३।९२

तृहः श्नमि कृते इमागमो हलादौ पिति सार्वधातुके । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् ॥

### ६७०. श्नान्नलोपः ॥ ६।४।२३

श्नमः परस्य नस्य लोपः स्यात् । हिनस्ति । जिहिंस । हिंसिता ॥

### ६७१. तिप्यनस्तेः ॥ ८।२।७३

पदान्तस्य सस्य दः स्यात्तिपि न त्वस्तेः । ससजुषोरुरित्यस्यापवादः । अहिनत्, अहिनद् । अहिंस्ताम् । अहिंसन् ॥

### ६७२. सिपि धातो रुर्वा ॥ ८।२।७४

पदान्तस्य धातोः सस्य रुः स्याद्वा, पक्षे दः । अहिनः, अहिनत्, अहिनद् ॥ उन्दी क्लेदने ॥ १३ ॥ उनत्ति । उन्तः । उन्दन्ति ।

उन्दाञ्चकार । औनत्, औनद् । औन्ताम् । औन्दन् । औनः, औनत्, औनद् । औनदम् ॥ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु ॥ १४ ॥ अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ, आनङ्क्थ । अञ्जिता, अङ्क्ता । अङ्ग्धि । अनजानि । आनक् ॥

## ६७३. अञ्जेः सिचि ॥ ७।२।७१

अञ्जेः सिचो नित्यमिट् स्यात् । आञ्जीत् ॥ तञ्चू संकोचने ॥ १५ ॥ तनक्ति । तञ्चिता, तङ्क्ता । ओविजी भयचलनयोः ॥ १६ ॥ विनक्ति ॥ विङ्क्तः । विज इडिति ङित्त्वम् । विविजिथ । विजिता । अविनक् । अविजीत् ॥ शिषॢ विशेषणे ॥ १७ ॥ शिनष्टि । शिं शिंष्टः । शिंषन्ति । शिनक्षि । शिशेष । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः । शिण्ड्ढि । शिनषाणि । अशिनट् । शिंष्यात् । शिष्यात् । अशिषत् ॥ एवं पिषॢ संचूर्णने ॥ १८ ॥ भञ्जो आमर्दने ॥ १९ ॥ श्नान्नलोपः । भनक्ति । बभञ्जिथ, बभङ्क्थ । भङ्क्ता । भङ्ग्धि । अभाङ्क्षीत् ॥ भुज पालनाभ्यवहारयोः ॥ २० ॥ भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् ॥

## ६७४. भुजोऽनवने ॥ १।३।६६

तङानौ स्तः । ओदनं भुङ्क्ते । अनवने किम्? महीं भुनक्ति ॥ ञिइन्धी दीप्तौ ॥ २१ ॥ इन्द्धे । इन्धाते । इन्धाताम् । इनधै । ऐन्ध । ऐन्धताम् । ऐन्धाः । विद विचारणे ॥ २२ ॥ विन्ते । वेत्ता ॥

*इति रुधादयः ॥ ७ ॥*

# अथ तनादयः

**तनु** विस्तारे ॥ १ ॥

### ६७५. तनादिकृञ्भ्य उः ॥ ६।१।७९

शपोऽपवादः । तनोति, तनुते । ततान, तेने । तनितासि, तनितासे । तनोतु । तनुताम् । अतनोत्, अतनुत । तनुयात्, तन्वीत । तन्यात्, तनिषीष्ट । अतानीत्, अतनीत् ॥

### ६७६. तनादिभ्यस्तथासोः ॥ २।४।७९

तनादेः सिचो वा लुक् स्यात्तथासोः । अतत, अतनिष्ट । अतथाः, अतनिष्ठाः । अतनिष्यत्, अतनिष्यत ॥ षणु दाने ॥ २ ॥ सनोति, सनुते ॥

### ६७७. ये विभाषा ॥ ६।४।४३

जनसनखनामात्वं वा यादौ क्ङिति । सायात्, सन्यात् ॥

## ६७८. जनसनखनां सञ्झलोः ॥ ६।४।४२

एषामाकारेऽन्तादेशः स्यात् सनि झलादौ क्ङिति । असात, असनिष्ट ॥ **क्षणु** हिंसायाम् ॥ ३ ॥ क्षणोति, क्षणुते ॥ ह्म्यन्तेति न वृद्धिः । अक्षणीत्, अक्षत, अक्षणिष्ट । अक्षथाः, अक्षणिष्ठाः ॥ क्षिणु च ॥ ४ ॥ अप्रत्यये लघूपधस्य गुणो वा । क्षेणोति, क्षिणोति । क्षेणिता । अक्षेणीत्, अक्षित, अक्षेणिष्ट ॥ तृणु अदने ॥ ५ ॥ तृणोति, तर्णोति तृणुते, तर्णुते ॥ डुकृञ् करणे ॥ ६ ॥ करोति ॥

## ६७९. अत उत्सार्वधातुके ॥ ६।४।११०

उप्रत्ययान्तस्य कृञोऽकारस्य उः स्यात् सार्वधातुके क्ङिति । कुरुतः ॥

## ६८०. न भकुर्छुराम् ॥ ८।२।७९

भस्य कुर्छुरोरुपधाया न दीर्घः । कुर्वन्ति ॥

## ६८१. नित्यं करोतेः ॥ ६।४।१०८

करोतेः प्रत्ययोकारस्य नित्यं लोपो म्वोः परयोः । कुर्वः । कुर्मः । कुरुते । चकार, चक्रे । कर्तासि, कर्तासे । करिष्यति, करिष्यते । करोतु । कुरुताम् । अकरोत् । अकुरुत ॥

## ६८२. ये च ॥ ६।४।१०९

कृञ उलोपो यादौ प्रत्यये परे। कुर्यात्, कुर्वीत। क्रियात्, कृषीष्ट। अकार्षीत्, अकृत। अकरिष्यत्, अकरिष्यत॥

### ६८३. सम्परिभ्यां करोतौ भूषणे॥ ६।१।१३७

### ६८४. समवाये च॥ ६।१।१३८

सम्परिपूर्वस्य करोतेः सुट् स्याद् भूषणे संघाते चार्थे। संस्करोति। अलङ्करोतीत्यर्थः। संस्कुर्वन्ति। सङ्घीभवन्तीत्यर्थः। सम्पूर्वस्य क्वचिदभूषणेऽपि सुट्। संस्कृतं भक्षा इति ज्ञापकात्॥

### ६८५. उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च॥ ६।१।१३९

उपात्कृञः सुट् स्यादेष्वर्थेषु चात्प्रागुक्तयोरर्थयोः। प्रतियत्नो गुणाधानम्। विकृतमेव वैकृतं विकारः। वाक्याध्याहार आकाङ्क्षितैकदेशपूरणम्। उपस्कृता कन्या। उपस्कृता ब्राह्मणाः। एधोदकस्योपस्करोति। उपस्कृतं भुङ्क्ते। उपस्कृतं ब्रूते॥ वनु याचने॥ ७॥ वनुते। ववने॥ मनु अवबोधने॥ ८॥ मनुते। मेने। मनिष्यते। मनुताम्। अमनुत। मन्वीत। मनिषीष्ट। अमत, अमनिष्ट। अमनिष्यत॥

*इति तनादयः॥ ८॥*

# अथ क्र्यादयः

डुक्रीञ् द्रव्यविनिमये ॥ १ ॥

## ६८६. क्र्यादिभ्यः श्ना ॥ ३।१।८१

शपोऽपवादः । क्रीणाति । ई हल्यघोः । क्रीणीतः । श्नाभ्यस्तयोरातः । क्रीणन्ति । क्रीणासि । क्रीणीथः । क्रीणीथ । क्रीणामि । क्रीणीवः । क्रीणीमः । क्रीणीते । क्रीणाते । क्रीणते । क्रीणीषे । क्रीणाथे । क्रीणीध्वे । क्रीणे । क्रीणीवहे । क्रीणीमहे । चिक्राय । चिक्रियतुः । चिक्रियुः । चिक्रयिथ, चिक्रेथ । चिक्रिय । चिक्रिये । क्रेता । क्रेष्यति, क्रेष्यते । क्रीणातु, क्रीणीतात् । क्रीणीताम् । अक्रीणात्, अक्रीणीत । क्रीणीयात्, क्रीणीत । क्रीयात्, क्रेषीष्ट । अक्रैषीत्, अक्रेष्यत ॥ प्रीञ् तर्पणे कान्तौ च ॥ २ ॥ प्रीणाति, प्रीणीते ॥ श्रीञ् पाके ॥ ३ ॥ श्रीणाति, श्रीणीते ॥ मीञ् हिंसायाम् ॥ ४ ॥

## ६८७. हिनुमीना ॥ ८।४।१५

उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्य णः स्यात् । प्रमीणाति, प्रमीणीते । मीनातीत्यात्वम् । ममौ । मिम्यतुः । ममिथ, ममाथ । मिम्ये । माता । मास्यति । मीयात्, मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त ॥षिञ्

बन्धने ॥ ५ ॥ सिनाति, सिनीते । सिषाय, सिष्ये । सेता ॥ स्कुञ् आप्लवने ॥ ६ ॥

## ६८८. स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च ॥ ३।१।८२

चात् श्ना । स्कुनोति, स्कुनाति । स्कुनुते, स्कुनीते । चुस्काव, चुस्कुवे । स्कोता । अस्कौषीत्, अस्कोष्ट ॥ स्तन्भ्वादयश्चत्वारः सौत्राः । सर्वे रोधनार्थाः परस्मैपदिनः ॥

## ६८९. हलः श्नः शानज्झौ ॥ ३।१।८३

हलः परस्य श्नः शानजादेशः स्याद्धौ परे । स्तभान ॥

## ६९०. जॄस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ ३।१।५८

च्लेरङ् वा स्यात् ॥

## ६९१. स्तन्भेः ॥ ८।३।६७

स्तन्भेः सौत्रस्य सस्य षः स्यात् । व्यष्टभत् । अस्तम्भीत् ॥ युञ् बन्धने ॥ ७ ॥ युनाति, युनीते । योता ॥ **क्नूञ्** शब्दे ॥ ८ ॥ क्नूनाति, क्नूनीते ॥ द्रूञ् हिंसायाम् ॥ ९ ॥ द्रूणाति, द्रूणीते ॥ दॄ विदारणे ॥ १० ॥ दृणाति, दृणीते ॥ पूञ् पवने ॥ ११ ॥

## ६९२. प्वादीनां ह्रस्वः ॥ ७।३।८०

पूञ् लूञ् स्तॄञ् कॄञ् वॄञ् धूञ् शॄ पॄ वॄ भॄ मॄ दॄ जॄ झॄ धॄ नॄ कॄ ऋ गॄ ज्या री ली व्ली प्लीनां चतुर्विंशतेः शिति ह्रस्वः । पुनाति, पुनीते । पविता ॥ **लूञ्** छेदने ॥ १२ ॥ लुनाति, लुनीते ॥ **स्तॄञ्** आच्छादने ॥ १३ ॥ स्तृणाति । शर्पूर्वाः खयः । तस्तार । तस्तरतुः । तस्तरे । स्तरीता । स्तरिता । स्तृणीयात्, स्तृणीत । स्तीर्यात् ॥

## ६९३. लिङ्सिचोरात्मनेपदेषु ॥ ७।२।४२

वृङ्वृञ्भ्यामॄदन्ताच्च परयोर्लिङ्सिचोरिड् वा स्यात्तङि ॥

## ६९४. न लिङि ॥ ७।२।३९

वॄत इटो लिङि न दीर्घः । स्तरिषीष्ट । उश्चेति कित्त्वम् । स्तीर्षीष्ट । सिचि च परस्मैपदेषु । अस्तारीत् । अस्तारिष्टाम् । अस्तारिषुः । अस्तरीष्ट, अस्तरिष्ट, अस्तीर्ष्ट ॥ **कॄञ्** हिंसायाम् ॥ १४ ॥ कृणाति, कृणीते । चकार, चकरे ॥ वॄञ् वरणे ॥ १५ ॥ वृणाति, वृणीते । ववार, ववरे । वरिता, वरीता । उदोष्ठ्येत्युत्त्वम् । वूर्यात् । वरिषीष्ट, वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट, अवरीष्ट, अवूर्ष्ट ॥ **धूञ्** कम्पने ॥ १६ ॥ धुनाति, धुनीते । धविता, धोता । अधावीत् । अधविष्ट, अधोष्ट ॥ ग्रह उपादाने ॥ १७ ॥ गृह्णाति, गृह्णीते । जग्राह, जगृहे ॥

## ६९५. ग्रहोऽलिटि दीर्घः ॥ ७।२।३७

एकाचो ग्रहेर्विहितस्येटो दीर्घो न तु लिटि । ग्रहीता । गृह्णातु । हलः श्नः शानज्झाविति श्नः शानजादेशः । गृहाण । गृह्यात्, ग्रहीषीष्ट । ह्म्यन्तेति न वृद्धिः । अग्रहीत् । अग्रहीष्टाम् । अग्रहीष्ट । अग्रहीषाताम् ॥ कुष्अ निष्कर्षे ॥ १८ ॥ कुष्णाति । कोषिता ॥ अश भोजने ॥ १९ ॥ अश्नाति । आश । अशिता । अशिष्यति । अश्नातु । अशान ॥ मुष स्तेये ॥ २० ॥ मोषिता । मुषाण ॥ ज्ञा अवबोधने ॥ २१ ॥ जज्ञौ ॥ वृङ् संभक्तौ ॥ २२ ॥ वृणीते । ववृषे ॥ ववृढ्वे । वरिता, वरीता । अवरीष्ट, अवरिष्ट, अवृत ॥

*इति क्र्यादयः ॥ ९ ॥*

# अथ चुरादयः

**चुर** स्तेये ॥ १ ॥

## ६९६. सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्ण चुरादिभ्यो णिच् ॥ ३।१।२५

एभ्यो णिच् स्यात् । चूर्णान्तेभ्यः"प्रातिपदिकाद्धात्वर्थे" इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् । चुरादिभ्यस्तु स्वार्थे । पुगन्तेति गुणः । सनाद्यन्ता इति धातुत्वम् । तिप्शबादि । गुणायादेशौ । चोरयति ॥

## ६९७. णिचश्च ॥ १।३।७४

णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले । चोरयते । चोरयामास । चोरयिता । चोर्यात्, चोरयिषीष्ट । णिश्रीति चङ् । णौ चङीति ह्रस्वः । चङीति द्वित्वम् । हलादिः शेषः । दीर्घो लघोरित्यभ्यासस्य दीर्घः । अचूचुरत्, अचूचुरत ॥ कथ वाक्यप्रबन्धे ॥ २ ॥ अल्लोपः ॥

## ६९८. अचः परस्मिन्पूर्वविधौ ॥ १।१।५७

अल्विध्यर्थमिदम् । परनिमित्तोऽजादेशः स्थानिवत् स्यात्स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति स्थानिवत्वान्नोपधावृद्धिः । कथयति । अग्लोपित्वाद्दीर्घसन्वद्भावौ न । अचकथत् ॥ गणसंख्याने ॥ ३ ॥ गणयति ॥

## ६९९. ई च गणः ॥ ७।४।९७

गणयतेरभ्यासस्य ई स्याच्चङ्परे णौ चादत् । अजीगणत्, अजगणत् ॥

*इति चुरादयः ॥*

# अथ ण्यन्तप्रक्रिया

## ७००. स्वतन्त्रः कर्ता ॥ १।४।५४

क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥

## ७०१. तत्प्रयोजको हेतुश्च ॥ १।४।५५

कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात् ॥

## ७०२. हेतुमति च ॥ ३।१।२६

प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात् । भवन्तं प्रेरयति भावयति ॥

## ७०३. ओः पुयण्ज्यपरे ॥ ७।४।८०

सनि परे यदङ्गं तदवयवाभ्यासोकारस्य इत्स्यात् पवर्गयण्जकारेष्ववर्णपरेषु परतः ॥ अबीभवत् ॥ **ष्ठा** गतिनिवृत्तौ ॥

## ७०४. अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ ॥ ७।३।३६

स्थापयति ॥

## ७०५. तिष्ठतेरित् ॥ ७।४।५

उपधाया इदादेशः स्याच्चङ्परे णौ । अतिष्ठिपत् ॥ घट चेष्टायाम् ॥

### ७०६. मितां ह्रस्वः ॥ ६।४।९२

घटादीनां ज्ञपादीनां चोपधाया ह्रस्वः स्याण्णौ । घटयति ॥ ज्ञप ज्ञाने ज्ञापने च ॥ ज्ञपयति । अजिज्ञपत् ॥

*इति ण्यन्तप्रक्रिया*

# अथ सन्नन्तप्रक्रिया

### ७०७. धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥ ३।१।७

इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम् ॥ पठ व्यक्तायां वाचि ॥

### ७०८. सन्यङोः ॥ ६।१।९

सन्नन्तस्य यङन्तस्य च धातोरनभ्यासस्य प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य । सन्यतः । पठितुमिच्छति पिपठिषति । कर्मणः किम् ? गमनेनेच्छति । समान कर्तृकात् किम् ? शिष्याः पठन्त्वितीच्छति गुरुः । वा ग्रहणाद्वाक्यमपि ॥ लुङ्सनोर्घस्लृ ॥

### ७०९. सः स्यार्धधातुके ॥ ७।४।४९

सस्य तः स्यात्सादावार्धधातुके । अत्तुमिच्छति जिघत्सति । एकाच इति नेट् ॥

**७१०. अज्झनगमां सनि ॥ ६।४।१६**

अजन्तानां हन्तेरजादेशगमेश्च दीर्घो झलादौ सनि ॥

**७११. इको झल् ॥ १।२।९**

इगन्ताज्झलादिः सन् कित् स्यात् । ऋत इद्धातोः । कर्तुमिच्छति चिकीर्षति ॥

**७१२. सनि ग्रहगुहोश्च ॥ ७।२।१२**

ग्रहेर्गुहेरुगन्ताच्च सन इण् न स्यात् । बुभूषति ॥

*इति सन्नन्तप्रक्रिया ॥*

# अथ यङन्तप्रक्रिया

**७१३. धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥ ३।१।२२**

पौनःपुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् स्यात् ॥

**७१४. गुणो यङ्लुकोः ॥ ७।४।८२**

अभ्यासस्य गुणो यङि यङ्लुकि च परतः । ङिदन्तत्वादात्मनेपदम् । पुनः पुनरतिशयेन वा भवति बोभूयते । बोभूयाञ्चक्रे । अबोभूयिष्ट ॥

### ७१५. नित्यं कौटिल्ये गतौ ॥ ३।१।२३

गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे ॥

### ७१६. दीर्घोऽकितः ॥ ७।४।८३

अकितोऽभ्यासस्य दीर्घो यङ्यङ्लुकोः । कुटिलं व्रजति वाव्रज्यते ॥

### ७१७. यस्य हलः ॥ ६।४।४९

यस्येति संघातग्रहणम् । हलः परस्य यशब्दस्य लोप आर्धधातुके । आदेः परस्य । अतो लोपः । वाव्रजाञ्चक्रे । वाव्रजिता ॥

### ७१८. रीगृदुपधस्य च ॥ ७।४।९०

ऋदुपधस्य धातोरभ्यासस्य रीगागमो यङ्यङ्लुकोः । वरीवृत्यते । वरीवृताञ्चक्रे । वरीवर्तिता ॥

### ७१९. क्षुभ्नादिषु च ॥ ८।४।३९

णत्वं न । नरीनृत्यते । जरीगृह्यते ॥

*इति यङन्त प्रक्रिया ॥*

# अथ यङ्लुक् प्रक्रिया

## ७२०. यङोऽचि च ॥ २।४।७४

यङोऽचि प्रत्यये लुक् स्यात्, चकारात्तं विनापि क्वचित् । अनैमित्तिकोऽय मन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वम् । अभ्यासकार्यम् । धातुत्वाल्लडादयः । शेषात्कर्तरीति परस्मैपदम् । चर्करीतं चेत्यदादौ पाठाच्छपो लुक् ॥

## ७२१. यङो वा ॥ ७।३।९४

यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्येड् वा स्यात् । भूसुवोरिति गुणनिषेधो यङ्लुकि भाषायां न, बोभोतु, तेतिक्ते इति छन्दसि निपातनात् । बोभवीति, बोभोति । बोभूतः । अदभ्यस्तात् । बोभुवति । बोभवाञ्चकार, बोभवामास । बोभविता । बोभविष्यति । बोभवीतु, बोभोतु, बोभूतात् । बोभूताम् । बोभुवतु । बोभूहि । बोभवानि । अबोभवीत्, अबोभोत् । अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयाताम् । बोभूयुः । बोभूयात् । बोभूयास्ताम् । बोभूयासुः । गातिस्थेति सिचो लुक् । यङो वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक् । अबोभूवीत्, अबोभोत् । अबोभूताम् । अबोभूवुः । अबोभविष्यत् ॥

*इति यङ्लुक् प्रक्रिया ॥*

# अथ नामधातवः

## ७२२. सुप आत्मनः क्यच् ॥ ३।१।८

इषिकर्मण एषितुः संबन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात् ॥

## ७२३. सुपो धातुप्रातिपदिकयोः ॥ २।४।७१

एतयोरवयवस्य सुपो लुक् ॥

## ७२४. क्यचि च ॥ ७।४।३३

अवर्णस्य ईः । आत्मनः पुत्रमिच्छति पुत्रीयति ॥

## ७२५. नः क्ये ॥ १।४।१५

क्यचि क्यङि च नान्तमेव पदं नान्यत् । नलोपः । राजीयति । नान्तमेवेति किम्? वाच्यति । हलि च । गीर्यति । पूर्यति । धातोरित्येव । नेह - दिवमिच्छति दिव्यति ॥

## ७२६. क्यस्य विभाषा ॥ ६।४।५०

हलः परयोः क्यच्क्यङारेलोपो वार्धधातुके । आदेः परस्य । अतो लोपः । तस्य स्थानिवत्त्वाल्लघूपधगुणो न । समिधिता, समिध्यिता ॥

## ७२७. काम्यच्च ॥ ३।१।९

उक्तविषये काम्यच् स्यात् । पुत्रमात्मन इच्छति पुत्रकाम्यति । पुत्रकाम्यिता ॥

## ७२८. उपमानादाचारे ॥ ३।१।१०

उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् । पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति द्विजम् ॥ *(सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः)* । अतो गुणे । कृष्ण इवाचरति कृष्णति । स्व इवाचरति स्वति । सस्वौ ॥

## ७२९. अनुनासिकस्य क्विझलोः क्ङिति ॥ ६।४।१५

अनुनासिकान्तस्योपधाया दीर्घः स्यात्क्वौ झलादौ च क्ङिति । इदमिवाचरति इदामति । राजेव राजानति । पन्था इव पथीनति ॥

## ७३०. कष्टाय क्रमणे ॥ २।१।१४

चतुर्थ्यन्तात् कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात् । कष्टाय क्रमते कष्टायते । पापं कर्तुमुत्सहत इत्यर्थः ॥

## ७३१. शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥ ३।१।१७

एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात् । शब्दं करोति शब्दायते ॥ (ग.सू) तत्करोति तदाचष्टे इति णिच् ॥ (ग.सू) प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च । प्रातिपदिकाद्धात्वर्थे णिच्

स्यात्, इष्टे यथा प्रातिपदिकस्य पुंवद्भाव-रभाव-टिलोप-विन्मतुब्लोप-यणादिलोप-प्रस्थस्फाद्यादेश-भसंज्ञास्तद्वण्णावपि स्युः । इत्यल्लोपः । घटं करोत्याचष्टे वा घटयति ॥

*इति नामधातवः*

# अथ कण्ड्वादयः

## ७३२. कण्ड्वादिभ्यो यक् ॥ ३।१।२७

एभ्यो धातुभ्यो नित्यं यक् स्यात्स्वार्थे । कण्डूञ् गात्रविघर्षणे ॥ १ ॥ कण्डूयति । कण्डूयत इत्यादि ॥

*इति कण्ड्वादयः ॥*

# अथात्मनेपदप्रक्रिया

## ७३३. कर्तरि कर्मव्यतिहारे ॥ १।३।१४

क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदम् । व्यतिलुनीते । अन्यस्य योग्यं लवनं करोतीत्यर्थः ॥

## ७३४. न गतिहिंसार्थेभ्यः ॥ १।३।१५

व्यतिगच्छन्ति । व्यतिघ्नन्ति ॥

## ७३५. नेर्विशः ॥ १।३।१७

निविशते ॥

**७३६. परिव्यवेभ्यः क्रियः ॥ १।३।१८**

परिक्रीणीते। विक्रीणीते। अवक्रीणीते॥

**७३७. विपराभ्यां जेः ॥ १।३।१९**

विजयते। पराजयते॥

**७३८. समवप्रविभ्यः स्थः ॥ १।३।२२**

संतिष्ठते। अवतिष्ठते। प्रतिष्ठते। वितिष्ठते॥

**७३९. अपह्नवे ज्ञः ॥ १।३।४४**

शतमपजानीते। अपलपतीत्यर्थः॥

**७४०. अकर्मकाच्च ॥ १।३।४५**

सर्पिषो जानीते। सर्पिषोपायेन प्रवर्तत इत्यर्थः॥

**७४१. उदश्चरः सकर्मकात् ॥ १।३।५३**

धर्ममुच्चरते। उल्लङ्घ्य गच्छतीत्यर्थः॥

**७४२. समस्तृतीयायुक्तात् ॥ १।३।५४**

रथेन सञ्चरते॥

**७४३. दाणश्च सा चेच्चतुर्थ्यर्थे ॥ १।३।५५**

सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात् तृतीया चेच्चतुर्थ्यर्थे। दास्या संयच्छते कामी॥

## ७४४. पूर्ववत्सनः ॥ १।२।६२

सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात् । एदिधिष्यते ॥

## ७४५. हलन्ताच्च ॥ १।२।१०

इक्समीपाद्धलः परो झलादिः सन् कित् । निविविक्षते ॥

## ७४६. गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ॥ १।३।३२ ॥

गन्धनं सूचनम् । उत्कुरुते । सूचयतीत्यर्थः । अवक्षेपणं भर्त्सनम् । श्येनो वर्तिकामुत्कुरुते । भर्त्सयतीत्यर्थः । हरिमुपकुरुते । सेवत इत्यर्थः । परदारान् प्रकुरुते । तेषु सहसा प्रवर्तते । एधोदकस्योपस्कुरुते । गुणमाधत्ते । कथाः प्रकुरुते । प्रकथयतीत्यर्थः । शतं प्रकुरुते । धर्मार्थं विनियुङ्क्ते । एषु किम् ? कटं करोति ॥

## ७४७. भुजोऽनवने ॥ १।३।६६

ओदनं भुङ्क्ते । अनवने किम् ? महीं भुनक्ति ॥

*इत्यात्मनेपदप्रक्रिया ॥*

# अथ परस्मैपदप्रक्रिया

## ७४८. अनुपराभ्यां कृञः ॥ १।३।७९

कर्तृगे च फले गन्धनादौ च परस्मैपदं स्यात् । अनुकरोति । पराकरोति ॥

## ७४९. अभिप्रत्यतिभ्यः क्षिपः ॥ १।३।८०

क्षिप प्रेरणे स्वरितेत् । अभिक्षिपति ॥

## ७५०. प्राद्वहः ॥ १।३।८१

प्रवहति ॥

## ७५१. परेर्मृषः ॥ १।३।८२

परिमृष्यति ॥

## ७५२. व्याङ्परिभ्यो रमः ॥ १।३।८३

रमु क्रीडायाम् ॥ विरमति ॥

## ७५३. उपाच्च ॥ १।३।८४

यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ॥

*इति परस्मैपदप्रक्रिया ॥*

*इति पदव्यवस्था ॥*

# अथ भावकर्मप्रक्रिया

## ७५४. भावकर्मणोः ॥ १।३।१३

लस्यात्मनेपदम् ॥

## ७५५. सार्वधातुके यक् ॥ ३।१।६७

धातोर्यक् भावकर्मवाचिनि सार्वधातुके । भावः क्रिया । सा च भावार्थकलकारेणानूद्यते । युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथमः पुरुषः । तिङ्वाच्यक्रियाया अद्रव्य रूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि किंत्वेकवचनमेवोत्सर्गतः ।

त्वया मया अन्यैश्च भूयते । बभूवे ॥

## ७५६. स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥ ६।४।६२

उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात्स्यादिषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च । चिण्वद्भावपक्षेऽयमिट् । चिण्वद्भावाद् वृद्धिः । भाविता, भविता । भाविष्यते, भविष्यते । भूयताम् । अभूयत । भाविषीष्ट, भविषीष्ट ॥

## ७५७. चिण् भावकर्मणोः ॥ ३।१।६६

च्लेश्चिण्स्याद्भावकर्मवाचिनि तशब्दे परे । अभावि । अभाविष्यत, अभविष्यत । अकर्मकोऽप्युपसर्गवशात्सकर्मकः । अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम्, अन्वभविषाताम् । णिलोपः । भाव्यते । भावयाञ्चक्रे, भावयाम्बभूवे, भावयामासे । चिण्वदिट् । आभीयत्वेना सिद्धत्वाण्णिलोपः । भाविता, भावयिता । भाविष्यते, भावयिष्यते । अभाव्यत । भाव्येत । भाविषीष्ट, भावयिषीष्ट । अभावि । अभाविषाताम्, अभावयिषाताम् ॥ बुभूष्यते ॥ अकृत्सार्वधातुकयोर्दीर्घः । स्तूयते विष्णुः । स्ताविता, स्तोता । स्ताविष्यते, स्तोष्यते । अस्तावि । अस्ताविषाताम्, अस्तोषाताम् ॥ ऋ गतौ । गुणोऽर्तीति गुणः । अर्यते ॥ स्मृ स्मरणे । स्मर्यते । सस्मरे । उपदेशग्रहणाच्चिण्वदिट् । आरिता, अर्ता । स्मारिता, स्मर्ता । अनिदितामिति नलोपः । त्रस्यते । इदितस्तु नन्द्यते । संप्रसारणम् । इज्यते ॥

## ७५८. तनोतेर्यकि ॥ ६।४।४४

आकारोऽन्तादेशो वा स्यात् । तायते, तन्यते ॥

### ७५९. तपोऽनुतापे च ॥ ३।१।६५

तपश्च्लेश्चिण् न स्यात् कर्मकर्तर्यनुतापे च । अन्वतप्त पापेन । घुमास्थेतीत्त्वम् । दीयते । धीयते । ददे ॥

### ७६०. आतो युक् चिण्कृतोः ॥ ७।३।३३

आदन्तानां युगागमः स्याच्चिणि ञ्णिति कृति च । दायिता, दाता । दायिषीष्ट, दासीष्ट । अदायि । अदायिषाताम् ॥ भज्यते ॥

### ७६१. भञ्जेश्च चिणि ॥ ६।४।३३

नलोपो वा स्यात् । अभाजि, अभञ्जि ॥ लभ्यते ॥

### ७६२. विभाषा चिण्णमुलोः ॥ ७।१।६९

लभेर्नुमागमो वा स्यात् । अलम्भि, अलाभि ॥

*इति भावप्रक्रिया ॥*

# अथ कर्मकर्तृप्रक्रिया

यदा कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामप्यकर्मकत्वात्कर्तरि भावे च लकारः ॥

### ७६३. कर्मवत्कर्मणा तुल्यक्रियः ॥ ३।१।८७

कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात् । कार्यातिदेशोऽयम् । तेन यगात्मनेपदचिण्वदिटः स्युः । पच्यते फलम् । भिद्यते काष्ठम् । अभेदि । भावे, भिद्यते काष्ठेन ॥

*इति कर्मकर्तृप्रक्रिया ॥*

# अथ लकारार्थप्रक्रिया

## ७६४. अभिज्ञावचने लृट् ॥ ३।२।११२

स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् । लङोऽपवादः ॥ वस निवासे ॥ स्मरसि कृष्ण गोकुले वत्स्यामः । एवं बुध्यसे, चेतयसे, इत्यादिप्रयोगेऽपि ॥

## ७६५. न यदि ॥ ३।२।११३

यद्योगे उक्तं न । अभिजानासि कृष्ण यद्वने अभुञ्ज्महि ॥

## ७६६. लट् स्मे ॥ ३।२।११८

लिटोऽपवादः । यजति स्म युधिष्ठिरः ॥

## ७६७. वर्तमानसमीप्ये वर्तमानवद्वा ॥ ३।३।१३१

वर्तमाने ये प्रत्यया उक्तास्ते वर्तमानसामीप्ये भूते भविष्यति च वा स्युः । कदागतोऽसि । अयमागच्छामि, अयमागमं वा । कदा गमिष्यसि। एष गच्छामि, गमिष्यामि वा॥

## ७६८. हेतुहेतुमतोर्लिङ्॥ ३।३।१५६

वा स्यात्। कृष्णं नमेच्चेत्सुखं यायात्। कृष्णं नंस्यति चेत्सुखं यास्यति । (***भविष्यत्येवेष्यते***) । नेह । हन्तीति पलायते ॥ विधिनिमन्त्रणेति लिङ्। विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम्। यजेत ॥ निमन्त्रणंनियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम्। इह भुञ्जीत ॥ आमन्त्रणं कामचारानुज्ञा। इहासीत॥ अधीष्टं सत्कारपूर्वको व्यापारः। पुत्रमध्यापयेद् भवान्॥ संप्रश्नः संप्रधारणम्। किं भो वेदमधीयीय उत तर्कम्॥ प्रार्थनं याच्ञा। भो भोजनं लभेय। एवं लोट्॥

*इति लकारार्थप्रक्रिया॥*

*इति तिङन्तं समाप्तम्॥*

# अथ कृदन्ते कृत्प्रक्रिया

**७६९. धातोः ॥ ३।१।९१**

आतृतीयाध्यायसमाप्तेर्ये प्रत्ययास्ते धातोः परे स्युः । कृदतिङिति कृत्संज्ञा ॥

**७७०. वासरूपोऽस्त्रियाम् ॥ ३।१।९४**

अस्मिन्धात्वधिकारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं विना ॥

**७७१. कृत्याः ॥ ३।१।९५**

ण्वुल्तृचावित्यतः प्राक् कृत्यसंज्ञाः स्युः ॥

**७७२. कर्तरि कृत् ॥ ३।४।६७**

कृत्प्रत्ययः कर्तरि स्यात् । इति प्राप्ते --.

**७७३. तयोरेव कृत्यक्तखलर्थाः ॥ ३।४।७०**

एते भावकर्मणोरेव स्युः ॥

**७७४. तव्यत्तव्यानीयरः ॥ ३।१।९६**

धातोरेते प्रत्ययाः स्युः । एधितव्यम्, एधनीयं त्वया । भावे औत्सर्गिकमेकवचनं क्लीबत्वं च । चेतव्यश्चयनीयो वा धर्मस्त्वया

(केलिमर उपसंख्यानम्) पचेलिमा माषाः । पक्तव्या इत्यर्थः । भिदेलिमाः सरलाः । भेत्तव्या इत्यर्थः । कर्मणि प्रत्ययः ॥

## ७७५. कृत्यल्युटो बहुलम् ॥ ३।३।११३

**क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।**
**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ १ ॥**

स्नात्यनेनेति स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः ॥

## ७७६. अचो यत् ॥ ३।१।९७

अजन्ताद्धातोर्यत् स्यात् । चेयम् ॥

## ७७७. ईद्यति ॥ ६।४।६५

यति परे आत ईत्स्यात् । देयम् । ग्लेयम् ॥

## ७७८. पोरदुपधात् ॥ ३।१।९८

पवर्गान्ताददुपधाद्यत्स्यात् । ण्यतोऽपवादः । शप्यम् । लभ्यम् ॥

## ७७९. एतिस्तुशास्वृदृजुषः क्यप् ॥ ३।१।१०९

एभ्यः क्यप् स्यात् ॥

## ७८०. ह्रस्वस्य पिति कृति तुक् ॥ ६।१।७१

इत्यः । स्तुत्यः । शासु अनुशिष्टौ ॥

## ७८१. शास इदङ्हलोः ॥ ६।४।३४

शास उपधाया इत्स्यादङि हलादौ क्ङिति । शिष्यः । वृत्यः । आदृत्यः । जुष्यः ॥

### ७८२. मृजेर्विभाषा ॥ ३।१।११३

मृजेः क्यब्वा । मृज्यः ॥

### ७८३. ऋहलोर्ण्यत् ॥ ३।१।१२४

ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत् । कार्यम् । हार्यम् । धार्यम् ॥

### ७८४. चजोः कु घिण्ण्यतोः ॥ ७।३।५२

चजोः कुत्वं स्यात् घिति ण्यति च परे ॥

### ७८५. मृजेर्वृद्धिः ॥ ७।२।११४

मृजेरिको वृद्धिः सार्वधातुकार्धधातुकयोः । मार्ग्यः ॥

### ७८६. भोज्यं भक्ष्ये ॥ ७।३।६९

भोग्यमन्यत् ॥

*इति कृत्यप्रक्रिया ॥*

# अथ पूर्वकृदन्तम्

## ७८७. ण्वुल्तृचौ ॥ ३।१।१३३

धातोरेतौ स्तः । कर्तरि कृदिति कर्त्रर्थे ॥

## ७८८. युवोरनाकौ ॥ ७।१।१

यु वु एतयोरनाकौ स्तः । कारकः । कर्ता ॥

## ७८९. नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ॥ ३।१।१३४

नन्द्यादेर्ल्युः, ग्रह्यादेर्णिनिः, पचादेरच् स्यात् । नन्दयतीति नन्दनः । जनमर्दयतीति जनार्दनः । लवणः । ग्राही । स्थायी । मन्त्री । पचादिराकृतिगणः ॥

## ७९०. इगुपधज्ञाप्रीकिरः कः ॥ ३।१।१३५

एभ्यः कः स्यात् । बुधः । कृशः । ज्ञः । प्रियः । किरः ॥

## ७९१. आतश्चोपसर्गे ॥ ३।१।१३६

प्रज्ञः । सुग्लः ॥

## ७९२. गेहे कः ॥ ३।१।१४४

गेहे कर्तरि ग्रहेः कः स्यात् । गृहम् ॥

## ७९३. कर्मण्यण् ॥ ३।२।१

कर्मण्युपपदे धातोरण् प्रत्ययः स्यात् । कुम्भं करोतीति कुम्भकारः ॥

## ७९४. आतोऽनुपसर्गे कः ॥ ३।२।३

आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात् । अणोऽपवादः । आतो लोप इटि च । गोदः । धनदः । कम्बलदः । अनुपसर्गे किम् ? गोसन्दायः । (वा.) ***मूलविभुजादिभ्यः कः*** । मूलानि विभुजति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः । कुध्रः ॥

## ७९५. चरेष्टः ॥ ३।२।१६

अधिकरणे उपपदे । कुरुचरः ॥

## ७९६. भिक्षा सेनादायेषु च ॥ ३।२।१७

&न्ब्स्प्ंभिक्षाचारः । सेनाचारः । आदायेति ल्यबन्तम् । आदायचरः ॥

## ७९७. कृञो हेतुताच्छील्यानुलोम्येषु ॥ ३।२।२०

एषु द्योत्येषु करोतेष्टः स्यात् ॥

## ७९८. अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ॥ ८।३।४६

आदुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सादेशः करोत्यादिषु परेषु । यशस्करी विद्या । श्राद्धकरः । वचनकरः ॥

## ७९९. एजेः खश् ॥ ३।२।२८

ण्यन्तादेजेः खश् स्यात् ॥

## ८००. अरुर्द्विषदजन्तस्य मुम् ॥ ६।३।६७

अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात्खिदन्ते परे न त्वव्ययस्य । शित्त्वाच्छबादिः । जनमेजयतीति जनमेजयः ॥

## ८०१. प्रियवशे वदः खच् ॥ ३।२।३८

प्रियंवदः । वशंवदः ॥

## ८०२. अन्येभ्योऽपि दृश्यन्ते ॥ ३।२।७५

मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः ॥

## ८०३. नेड्वशि कृति ॥ ७।२।८

वशादेः कृत इण् न स्यात् ॥ शॄ हिंसायाम् ॥ सुशर्मा प्रातरित्वा ॥

## ८०४. विड्वनोरनुनासिकस्याऽत् ॥ ६।४।४१

अनुनासिकस्याऽत्स्यात् । विजायत इति विजावा ॥ ओणृ अपनयने ॥ अवावा । विच् ॥ रुष रिष हिंसायाम् ॥ रोट् । रेट् । सुगण् ॥

**८०५. क्विप् च ॥ ३।२।७६**

अयमपि दृश्यते। उखास्रत्। पर्णध्वत्। बाहभ्रट्॥

**८०६. सुप्यजातौ णिनिस्ताच्छील्ये ॥ ३।२।७८**

अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये। उष्णभोजी॥

**८०७. मनः ॥ ३।२।८२**

सुपि मन्यतेर्णिनिः स्यात्। दर्शनीयमानी॥

**८०८. आत्ममाने खश्च ॥ ३।२।८३**

स्वकर्मके मनने वर्त्तमानान्मन्यतेः सुपि खश् स्यात् चाण्णिनिः। पण्डितमात्मानं मन्यते पण्डितंमन्यः। पण्डितमानी॥

**८०९. खित्यनव्ययस्य ॥ ६।३।६६**

खिदन्ते परे पूर्वपदस्य ह्रस्वः। ततो मुम्। कालिम्मन्या॥

**८१०. करणे यजः ॥ ३।२।८५**

करणे उपपदे भूतार्थे यजेर्णिनिः कर्तरि। सोमेनेष्टवान् सोमयाजी। अग्निष्टोमयाजी॥

**८११. दृशेः क्वनिप् ॥ ३।२।९४**

कर्मणि भूते। पारं दृष्टवान् पारदृश्वा॥

**८१२. राजनि युधि कृञ ॥ ३।२।९५**

क्वनिप्स्यात् । युधिरन्तर्भावितण्यर्थः । राजानं योधितवान् राजयुध्वा । राजकृत्वा ॥

**८१३. सहे च ॥ ३।२।९६**

कर्मणीति निवृत्तम् । सह योधितवान् सहयुध्वा । सहकृत्वा ॥

**८१४. सप्तम्यां जनेर्डः ॥ ३।२।९७**

**८१५. तत्पुरुषे कृति बहुलम् ॥ ६।३।१४**

ङेरलुक् । सरसिजम्, सरोजम् ॥

**८१६. उपसर्गे च संज्ञायाम् ॥ ३।२।९९**

प्रजा स्यात्संततौ जने ॥

**८१७. क्तक्तवतू निष्ठा ॥ १।१।२६**

एतौ निष्ठासंज्ञौ स्तः ॥

**८१८. निष्ठा ॥ ३।२।१०२**

भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् । तत्र तयोरेवेति भावकर्मणोः क्तः । कर्तरि कृदिति कर्तरि क्तवतुः । उकावितौ । स्नातं मया । स्तुतस्त्वया विष्णुः । विश्वं कृतवान् विष्णुः ॥

**८१९. रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥ ८।२।४२**

रदाभ्यां परस्य निष्ठातस्य नः स्यात् निष्ठापेक्षया पूर्वस्य धातोर्दस्य च ॥ शॄ हिंसायाम् ॥ ॠत इत् । रपरः । णत्वम् । शीर्णः । भिन्नः । छिन्नः ॥

## ८२०. संयोगादेरातो धातोर्यण्वतः ॥ ८।२।४३

निष्ठातस्य नः स्यात् । द्राणः । ग्लानः ॥

## ८२१. ल्वादिभ्यः ॥ ८।२।४४

एकविंशतेर्लूञादिभ्यः प्राग्वत् । लूनः ॥ ज्या धातुः ॥ ग्रहिज्येति संप्रसारणम् ॥

## ८२२. हलः ॥ ६।४।२

अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्य दीर्घः । जीनः ॥

## ८२३. ओदितश्च ॥ ८।२।४५

भुजो भुग्नः । टुओश्वि, उच्छूनः ॥

## ८२४. शुषः कः ॥ ८।२।५१

निष्ठातस्य कः ॥ शुष्कः ॥

## ८२५. पचो वः ॥ ८।२।५२

पक्वः ॥ क्षै क्षये ॥

**८२६. क्षायो मः ॥ ८।२।५३**

क्षामः ॥

**८२७. निष्ठायां सेटि ॥ ६।४।५२**

णेर्लोपः। भावितः। भावितवान्। दृह हिंसायाम्॥

**८२८. दृढः स्थूलबलयोः ॥ ७।२।२०**

स्थूले बलवति च निपात्यते॥

**८२९. दधातेर्हिः ॥ ७।४।४२**

&न्ब्स्प्ंतादौ किति। हितम्॥

**८३०. दो दद् घोः ॥ ७।४।४६**

घुसंज्ञकस्य दा इत्यस्य दथ् स्यात् तादौ किति। चर्त्वम्। दत्तः॥

**८३१. लिटः कानज्वा ॥ ३।२।१०६**

**८३२. क्वसुश्च ॥ ३।२।१०७**

लिटः कानच् क्वसुश्च वा स्तः। तङानावात्मनेपदम्। चक्राणः॥

**८३३. म्वोश्च ॥ ८।२।६५**

मान्तस्य धातोर्नत्वं म्वोः परतः। जगन्वान्॥

**८३४. लटः शतृशानचावप्रथमासमानाधिकरणे ॥ ३।२।१२४**

अप्रथमान्तेन समानाधिकरणे लट एतौ वा स्तः । शबादि । पचन्तं चैत्रं पश्य ॥

### ८३५. आने मुक् ॥ ७।२।८२

अदन्ताङ्गस्य मुगागमः स्यादाने परे । पचमानं चैत्रं पश्य । लडित्यनुवर्तमाने पुनर्लड्ग्रहणात् प्रथमासामानाधिकरण्येऽपि क्वचित् । सन् द्विजः ॥

### ८३६. विदेः शतुर्वसुः ॥ ७।१।३६

वेत्तेः परस्य शतुर्वसुरादेशो वा । विदन् । विद्वान् ॥

### ८३७. तौ सत् ॥ ३।२।१२७

तौ शतृशानचौ सत्संज्ञौ स्तः ॥

### ८३८. ऌटः सद्वा ॥ ३।३।१४

व्यवस्थितविभाषेयम् । तेनाप्रथमासामानाधिकरण्ये प्रत्योत्तरपदयोः संबोधने लक्षणहेत्वोश्च नित्यम् । करिष्यन्तं करिष्यमाणं पश्य ॥

### ८३९. आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥ ३।२।१३४

क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलादिषु कर्तृषु बोध्याः ॥

 

**८४०. तृन् ॥ ३।२।१३४**

कर्ता कटान् ॥

**८४१. जल्पभिक्षकुट्टलुण्टवृङः षाकन् ॥ ३।२।१५५**

**८४२. षः प्रत्ययस्य ॥ १।३।६**

प्रत्ययस्यादिः ष इत्संज्ञः स्यात् । जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकः । वराकी ॥

**८४३. सनाशंसभिक्ष उः ॥ ३।२।१६८**

चिकीर्षुः । आशंसुः । भिक्षुः ॥

**८४४. भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ॥ ३।२।१७७**

विभ्राट् । भाः ॥

**८४५. राल्लोपः ॥ ६।४।२१**

रेफाच्छ्वोर्लोपः क्वौ झलादौ क्ङिति । धूः । विद्युत् । ऊर्क् । पूः । दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः । जूः । ग्रावस्तुत् । (***क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च***) । वक्तीति वाक् ॥

**८४६. च्छ्वोः शूडनुनासिके च ॥ ६।४।१९**

सतुक्कस्य छस्य वस्य च क्रामात् श् ऊठ् इत्यादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति। पृच्छतीति प्राट्। आयतं स्तौतीति आयतस्तूः। कटं प्रवते कटप्रूः। जूरुक्तः। श्रयति हरिं श्रीः॥

## ८४७. दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे॥ ३।२।१८२

दाबादेः ष्ट्रन् स्यात्करणेऽर्थे। दात्यनेन दात्रम्। नेत्रम्॥

## ८४८. तितुत्रतथसिसुसरकसेषु च॥ ७।२।९

एषां दशानां कृत्प्रत्ययानामिण् न/ शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्त्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्रम्। दंष्ट्रा। नद्ध्री॥

## ८४९. अर्तिलूधूसूखनसहचर इत्रः॥ ६।२।१८४

अरित्रम्। लवित्रम्। धुवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्॥

## ८५०. पुवः संज्ञायाम्॥ ३।२।१८५॥

पवित्रम्॥

*इति पूर्वकृदन्तम्॥*

# अथोणादयः

***कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥ १ ॥***

करोतीति कारुः । वातीति वायुः । पायुर्गुदम् । जायुरौषधम् । मायुः पित्तम् । स्वादुः । साध्नोति परकार्यमिति साधुः । आशु शीघ्रम् ॥

## ८५१. उणादयो बहुलम् ॥ ३।३।१

एते वर्तमाने संज्ञायाम् च बहुलं स्युः । केचिदविहिता अप्यूह्याः ॥

**संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।**
**कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥**

*इत्युणादयः ॥*

# अथोत्तरकृदन्तम्

## ८५२. तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ॥ ३।३।१०

क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति ॥

## ८५३. कालसमयवेलासु तुमुन् ॥ ३।३।१६७

कालार्थेषूपपदेषु तुमुन् । कालः समयो वेला वा भोक्तुम् ॥

 

**८५४. भावे ॥ ३।३।१८**

सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ्। पाकः ॥

**८५५. अकर्तरि च कारके संज्ञायाम् ॥ ३।३।१९**

कर्तृभिन्ने कारके घञ् स्यात् ॥

**८५६. घञि च भावकरणयोः ॥ ६।४।२७**

रञ्जेर्नलोपः स्यात् । रागः । अनयोः किम्? रज्यत्यस्मिन्निति रङ्गः ॥

**८५७. निवासचितिशरीरोपसमाधानेष्वादेश्च कः ॥ ३।३।४१**

एषु चिनोतेर्घञ् आदेश्च ककारः । उपसमाधानं राशीकरणम् । निकायः। कायः/ गोमयनिकायः ॥

**८५८. एरच् ॥ ३।३।५६**

इवर्णान्तादच्। चयः। जयः ॥

**८५९. ॠदोरप् ॥ ३।३।५७**

ॠवर्णान्तादुवर्णान्ताच्चाप्। करः। गरः। यवः। लवः। स्तवः। पवः। (***घञर्थे कविधानम्***)। प्रस्थः। विघ्नः ॥

**८६०. ड्वितः क्त्रिः ॥ ३।३।८८**

## ८६१. क्त्रेर्मम्नित्यम् ॥ ४।४।२०

क्त्रिप्रत्ययान्तात्मप् निर्वृत्तेऽर्थे । पाकेन निर्वृत्तं पक्त्रिमम् । डुवप् उप्त्रिमम् ॥

## ८६२. ट्वितोऽथुच् ॥ ३।३।८९

टुवेपृ कम्पने, वेपथुः ॥

## ८६३. यजयाचयतविच्छप्रच्छरक्षो नङ् ॥ ३।३।९०

यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । रक्ष्णः ॥

## ८६४. स्वपो नन् ॥ ३।३।९१

स्वप्नः ॥

## ८६५. उपसर्गे घोः किः ॥ ३।३।९२

प्रधिः । उपधिः ॥

## ८६६. स्त्रियां क्तिन् ॥ ३।३।९४

स्त्रीलिङ्गे भावे क्तिन् स्यात् । घञोऽपवादः । कृतिः । स्तुतिः । (***ॠल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः***) । तेन नत्वम् । कीर्णिः । लूनिः । धूनिः । पूनिः । (***संपदादिभ्यः क्विप्***) । संपत् । विपत् । आपत् । (***क्तिन्नपीष्यते***) । संपत्तिः । विपत्तिः । आपत्तिः ॥

## ८६७. ऊतियूतिजूतिसातिहेतिकीर्तयश्च ॥ ३।३।९७

एते निपात्यन्ते ॥

**८६८. ज्वरत्वरस्रिव्यविमवामुपधायाश्च ॥ ६।४।२०**

एषामुपधावकारयोरूठ् अनुनासिके क्वौ झलादौ क्ङिति ॥ अतः क्विप् । जूः । तूः । स्रूः । ऊः । मूः ॥

**८६९. इच्छा ॥ ३।३।१०१**

इषेर्निपातोऽयम् ॥

**८७०. अ प्रत्ययात् ॥ ३।३।१०२**

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययः स्यात् । चिकीर्षा । पुत्रकाम्या ॥

**८७१. गुरोश्च हलः ॥ ३।३।१०३**

गुरुमतो हलन्तात्स्त्रियामकारः प्रत्ययः स्यात् । ईहा ॥

**८७२. ण्यासश्रन्थो युच् ॥ ३।३।१०७**

अकारस्यापवादः । कारणा । हारणा ॥

**८७३. नपुंसके भावे क्तः ॥ ३।३।११४**

**८७४. ल्युट् च ॥ ३।३।११५**

हसितम्, हसनम् ॥

**८७५. पुंसि संज्ञायां घः प्रायेण ॥ ३।३।११८**

## ८७६. छादेर्घेऽद्व्युपसर्गस्य ॥ ६।४।९६

द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे परे । दन्ताश्छाद्यन्तेऽनेनेति दन्तच्छदः । आकुर्वन्त्यस्मिन्नित्याकरः ॥

## ८७७. अवे तॄस्त्रोर्घञ् ॥ ३।३।१२०

अवतारः कूपादेः । अवस्तारो जवनिका ॥

## ८७८. हलश्च ॥ ३।३।१२१

हलन्ताद्धञ् । घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः ॥

## ८७९. ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ ३।३।१२६

करणाधिकरणयोरिति निवृत्तम् । एषु दुःखसुखार्थेषूपपदेषु खल् तयोरेवेति भावे कर्मणि च । कृच्छ्रे - दुष्करः कटो भवता । अकृच्छ्रे - ईषत्करः । सुकरः ॥

## ८८०. आतो युच् ॥ ३।३।१२८

खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः ॥

## ८८१. अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ॥ ३।४।१८

प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात् । प्राचां ग्रहणं पूजार्थम् । अमैवाव्ययेनेति नियमान्नोपपदसमासः । दो दद्घोः । अलं

दत्त्वा । घुमास्थेतीत्त्वम् । पीत्वा खलु । अलंखल्वोः किम्? मा कार्षीत् । प्रतिषेधयोः किम्? अलंकारः ॥

### ८८२. समानकर्तृकयोः पूर्वकाले ॥ ३।४।२१

समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । भुक्त्वा व्रजति । द्वित्वमतन्त्रम् । भुक्त्वा पीत्वा व्रजति ॥

### ८८३. न क्त्वा सेट् ॥ १।२।१८

सेट् क्त्वा किन्न स्यात् । शयित्वा । सेट् किम् ? कृत्वा ॥

### ८८४. रलो व्युपधाद्धलादेः संश्च ॥ १।२।२६

इवर्णोवर्णोपधाद्धलादेः रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । द्युतित्वा, द्योतित्वा । लिखित्वा, लेखित्वा । व्युपधात्किम् ? वर्तित्वा । रलः किम् ? एषित्वा । सेट् किम् ? भुक्त्वा ॥

### ८८५. उदितो वा ॥ ७।२।५६

उदितः परस्य क्त्व इड्वा । शमित्वा, शान्त्वा । देवित्वा, द्यूत्वा । दधातेर्हिः । हित्वा ॥

### ८८६. जहातेश्च क्त्वि ॥ ७।४।४३

हित्वा । हाङस्तु - हात्वा ॥

### ८८७. समासेऽनञ्पूर्वे क्त्वो ल्यप् ॥ ७।१।३७

अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात् । तुक् । प्रकृत्य । अनञ् किम् ? अकृत्वा ॥

### ८८८. आभीक्ष्ण्ये णमुल् च ॥ ३।४।२२

आभीक्ष्ण्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च ॥

### ८८९. नित्यवीप्सयोः ॥ ८।१।४

आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्वित्वं स्यात् । आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञकेषु च कृदन्तेषु च । स्मारंस्मारं नमति शिवम् । स्मृत्वास्मृत्वा । पायम्पायम् । भोजम्भोजम् । श्रावंश्रावम् ॥

### ८९०. अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ॥ ३।४।२७

एषु कृञो णमुल् स्यात् । सिद्धोऽप्रयोगोऽस्य एवम्भूतश्चेत् कृञ् । व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः । अन्यथाकारम् । एवङ्कारम् । कथङ्कारम् । इत्थङ्कारं भुङ्क्ते । सिद्धेति किम् ? शिरोऽन्यथा कृत्वा भुङ्क्ते ॥

*इत्युत्तरकृदन्तम् ॥*

*इति कृदन्तम् ॥*

# अथ विभक्त्यर्थाः

## ८९१. प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ २।३।४६

नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये परिमाणमात्रे संख्यामात्रे च प्रथमा स्यात् । प्रातिपदिकार्थमात्रे - उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् । लिङ्गमात्रे - तटः, तटी, तटम् । परिमाणमात्रे - द्रोणो व्रीहिः । वचनं संख्या । एकः, द्वौ, बहवः ॥

## ८९२. सम्बोधने च ॥ २।३।४७

प्रथमा स्यात् । हे राम ।

*इति प्रथमा ।*

## ८९३. कर्तुरीप्सिततमं कर्म ॥ १।४।४९

कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् ॥

## ८९४. कर्मणि द्वितीया ॥ २।३।२

अनुक्ते कर्मणि द्वितीया स्यात् । हरिं भजति । अभिहिते तु कर्मादौ प्रथमा - हरिः सेव्यते । लक्ष्म्या सेवितः ॥

 

## ८९५. अकथितं च ॥ १।४।५१

अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् ।

**दुह्याच्पच्दण्ड् रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।**
**कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥ १ ॥**

गां दोग्धि पयः । बलिं याचते वसुधाम् । तण्डुलानोदनं पचति । गर्गान् शतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति हरति कर्षति वहति वा । अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिवत्ते वक्तीत्यादि ॥

*इति द्वितीया ।*

## ८९६. स्वतन्त्रः कर्ता ॥ १।४।५४

क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥

## ८९७. साधकतमं करणम् ॥ १।४।४२

क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात् ॥

## ८९८. कर्तृकरणयोस्तृतीया ॥ २।३।१८

अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली//

*इति तृतीया ।*

## ८९९. कर्मणा यमभिप्रैति स सम्प्रदानम् ॥ १।४।३२

दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात् ॥

## ९००. चतुर्थी सम्प्रदाने ॥ २।३।१३

विप्राय गां ददाति ॥

## ९०१. नमस्स्वस्तिस्वाहास्वधालंवषड्योगाच्च ॥ २।३।१६

एभिर्योगे चतुर्थी । हरये नमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि ॥

*इति चतुर्थी ।*

## ९०२. ध्रुवमपायेऽपादानम् ॥ १।४।२४

अपायो विश्लेषस्तस्मिन्साध्ये यद् ध्रुवमवधिभूतं कारकं तदपादानं स्यात् ॥

## ९०३. अपादाने पञ्चमी ॥ २।३।२८

ग्रामादायाति। धावतोऽश्वात्पततीत्यादि॥

*इति पञ्चमी।*

## ९०४. षष्ठी शेषे ॥ २।३।५०

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः संबन्धः शेषस्तत्र षष्ठी । राज्ञः पुरुषः । कर्मादीनापि संबन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधोदकस्योपस्कुरुते। भजे शम्भोश्चरणयोः॥

*इति षष्ठी।*

## ९०५. आधारोऽधिकरणम् ॥ १।४।४५

कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणं स्यात्॥

## ९०६. सप्तम्यधिकरणे च ॥ २।३।३६

अधिकरणे सप्तमी स्यात्, चकाराद्दूरान्तिकार्थेभ्यः। औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा। कटे आस्ते। स्थाल्यां पचति। मोक्षे इच्छास्ति। सर्वस्मिन्नात्मास्ति। वनस्य दूरे अन्तिके वा॥

*इति सप्तमी।*

*इति विभक्त्यर्थाः॥*

# अथ समासाः

तत्रादौ केवलसमासः । समासः पञ्चधा । तत्र समसनं समासः । स च विशेषसंज्ञा विनिर्मुक्तः केवलसमासः प्रथमः ॥ १ ॥ प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावो द्वितीयः ॥ २ ॥ प्रायेणोत्तरपदार्थ-प्रधानस्तत्पुरुषस्तृतीयः ॥ तत्पुरुषभेदः कर्मधारयः । कर्मधारयभेदो द्विगुः ॥ ३ ॥ प्रायेणान्यपदार्थप्रधानो बहुव्रीहिश्चतुर्थः ॥ ४ ॥ प्रायेणोभयपदार्थप्रधानो द्वन्द्वः पञ्चमः ॥ ५ ॥

## ९०७. समर्थः पदविधिः ॥ २।१।१

पदसंबन्धी यो विधिः स समर्थाश्रितो बोध्यः ॥

## ९०८. प्राक्कडारात्समासः ॥ २।१।३

कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते ॥

## ९०९. सह सुपा ॥ २।१।४

सुप् सुपा सह वा समस्यते ॥ समासत्वात्प्रातिपदिकत्वेन सुपो लुक् । परार्थाभिधानं वृत्तिः । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः । वृत्त्यर्थावबोधकं वाक्यं विग्रहः । सच लौकिकोऽलौकिकश्चेति द्विधा । तत्र पूर्वं भूत इति लौकिकः "पूर्व अम् भूत सु" इत्यलौकिकः । भूतपूर्वः । भूतपूर्वे चरडिति निर्देशात्पूर्वनिपातः । (*इवेन समासो विभक्त्यलोपश्च*) । वागर्थौ इव वागर्थाविव ॥

*इति केवलसमासः ॥ १ ॥*

 

# अथाव्ययीभावः

## ११०. अव्ययीभावः ॥ २।१।५

अधिकारोऽयं प्राक् तत्पुरुषात् ॥

## १११. अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु ॥ २।१।६

विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह नित्यं समस्यते सोऽव्ययीभावः । प्रायेणाविग्रहो नित्यसमासः, प्रायेणास्वपदविग्रहो वा । विभक्तौ, हरि ङि अधि इति स्थिते ॥

## ११२. प्रथमानिर्दिष्टं समास उपसर्जनम् ॥ १।२।४३

समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥

## ११३. उपसर्जनं पूर्वम् ॥ २।२।३०

समासे उपसर्जनं प्राक्प्रयोज्यम् । इत्यधेः प्राक् प्रयोगः । सुपो लुक् । एकदेशविकृतस्यानन्यत्वात्प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः । अव्ययीभावश्चेत्य व्ययत्वात्सुपो लुक् । अधिहरि ॥

## ११४. अव्ययीभावश्च ॥ २।४।१८

अयं नपुंसकं स्यात् ॥

## ९१५. नाव्ययीभावादतोऽम्त्वपञ्चम्याः ॥ २।४।८३

अदन्तादव्ययीभावात्सुपो न लुक्, तस्य पञ्चमी विना अमादेशश्च स्यात् ॥ गाः पातीति गोपास्तस्मिन्नित्यधिगोपम् ॥

## ९१६. तृतीयासप्तम्योर्बहुलम् ॥ २।४।५४

अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । अधिगोपम्, अधिगोपेन, अधिगोपे वा । कृष्णस्य समीपम् उपकृष्णम् । मद्राणां समृद्धिः सुमद्रम् । यवनानां व्यृद्धिर्दुर्यवनम् । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्यात्ययोऽतिहिमम् । निद्रा संप्रति न युज्यत इत्यतिनिद्रम् । हरिशब्दस्य प्रकाश इतिहरि । विष्णोः पश्चादनुविष्णु । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । रूपस्य योग्यमनुरूपम् । अर्थमर्थं प्रति प्रत्यर्थम् । शक्तिमनतिक्रम्य यथाशक्ति ॥

## ९१७. अव्ययीभावे चाकाले ॥ ६।३।८१

सहस्य सः स्यादव्ययीभावे न तु काले । हरेः सादृश्यं सहरि । ज्येष्ठस्यानु पूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युगपत् सचक्रम् । सदृशः सख्या ससखि । क्षत्राणां संपत्तिः सक्षत्रम् । तृणमप्यपरित्यज्य सतृणमत्ति । अग्निग्रन्थपर्यन्तमधीते साग्नि ॥

## ९१८. नदीभिश्च ॥ २।१।२०

नदीभिः सह संख्या समस्यते । (***समाहारे चायमिष्यते***) । पञ्चगङ्गम् । द्वियमुनम् ॥

## ९१९. तद्धिताः ॥ ४।१।७६

आपञ्चमसमाप्तेरधिकारोऽयम् ॥

## ९२०. अव्ययीभावे शरत्प्रभृतिभ्यः ॥ ५।४।१०७

शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे । शरदः समीपमुपशरदम् । प्रतिविपाशम् । (***जराया जरश्च***) । उपजरसमित्यादि ॥

## ९२१. अनश्च ॥ ५।४।१०८

अन्नन्तादव्ययीभावाट्टच् स्यात् ॥

## ९२२. नस्तद्धिते ॥ ६।४।१४४

नान्तस्य भस्य टेर्लोपस्तद्धिते । उपराजम् । अध्यात्मम् ॥

## ९२३. नपुंसकादन्यतरस्याम् ॥ ५।४।१०९

अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात् । उपचर्मम् । उपचर्म ॥

## ९२४. झयः ॥ ५।४।१११

झयन्तादव्ययीभावाट्टज्वा स्यात् । उपसमिधम् । उपसमित् ॥

*इत्यव्ययीभावः ॥ २ ॥*

# अथ तत्पुरुषः

## ९२५. तत्पुरुषः ॥ २।१।२२

अधिकारोऽयं प्राग्बहुव्रीहेः ॥

## ९२६. द्विगुश्च ॥ २।१।२३

द्विगुरपि तत्पुरुषसंज्ञकः स्यात् ॥

## ९२७. द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ २।१।२४

द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स च तत्पुरुषः। कृष्णं श्रितः कृष्णश्रित इत्यादि ॥

## ९२८. तृतीया तत्कृतार्थेन गुणवचनेन ॥ २।१।३०

तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह वा प्राग्वत्। शङ्कुलया खण्डः। धान्येनार्थो धान्यार्थः। तत्कृतेति किम्? अक्ष्णा काणः ॥

## ९२९. कर्तृकरणे कृता बहुलम् ॥ २।१।३२

कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् । हरिणा त्रातो हरित्रातः । नखैर्भिन्नः नखभिन्नः । (प.) कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् । नखनिर्भिन्नः ॥

## ९३०. चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ २।१।३६

चतुर्थ्यन्तार्थाय यत् तद्वाचिना अर्थादिभिश्च चतुर्थ्यंन्तं वा प्राग्वत् । यूपाय दारु यूपदारु । (***तदर्थेन प्रकृतिविकृतिभाव एवेष्टः***) । तेनेह न - रन्धनाय स्थाली । (***अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्***) । द्विजार्थः सूपः । द्विजार्था यवागूः । द्विजार्थं पयः । भूतबलिः । गोहितम् । गोसुखम् । गोरक्षितम् ॥

## ९३१. पञ्चमी भयेन ॥ २।१।३७

चोराद्भयं चोरभयम् ॥

## ९३२. स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥ २।१।३९

## ९३३. पञ्चम्याः स्तोकादिभ्यः ॥ ६।३।२

अलुगुत्तरपदे । स्तोकान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । कृच्छ्रादागतः ॥

## ९३४. षष्ठी ॥ २।२।८

सुबन्तेन प्राग्वत् । राजपुरुषः ॥

## ९३५. पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥ २।२।१

अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी । षष्ठीसमासापवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः । एकाधिकरणे किम् ? पूर्वश्छात्राणाम् ॥

## ९३६. अर्धं नपुंसकम् ॥ २।२।२

समांशवाच्यर्धशब्दो नित्यं क्लीबे, स प्राग्वत् । अर्धं पिप्पल्याः अर्धपिप्पली ।

## ९३७. सप्तमी शौण्डैः ॥ २।१।४०

सप्तम्यन्तं शौण्डादिभिः प्राग्वत् । अक्षेषु शौण्डः अक्षशोण्ड इत्यादि । द्वितीयातृतीयेत्यादियोगविभागादन्यत्रापि तृतीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः ॥

## ९३८. दिक्संख्ये संज्ञायाम् ॥ २।१।५०

संज्ञायामेवेति नियमार्थं सूत्रम् । पूर्वेषुकामशमी । सप्तर्षयः । तेनेह न - उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ॥

## ९३९. तद्धितार्थोत्तरपदसमाहारे च ॥ २।१।५१

 

तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वत् । पूर्वस्यां शालायां भवः - पूर्वा शाला इति समासे जाते *(सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः)* ॥

## १४०. दिक्पूर्वपदादसंज्ञायां ञः ॥ ४।२।१०७

अस्माद्भवाद्यर्थे ञः स्यादसंज्ञायाम् ॥

## १४१. तद्धितेष्वचामादेः ॥ ७।२।११७

ञिति णिति च तद्धितेष्वचामादेरचो वृद्धिः स्यात् । यस्येति च । पौर्वशालः । पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ । ***(द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्य समासवचनम्)*** ॥

## १४२. गोरतद्धितलुकि ॥ ५।४।९२

गोऽन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धितलुकि । पञ्चगवधनः ॥

## १४३. तत्पुरुषः समानाधिकरणः कर्मधारयः ॥ १।२।४२

## १४४. संख्यापूर्वो द्विगुः ॥ २।१।५२

तद्धितार्थेत्यत्रोक्तस्त्रिविधः संख्यापूर्वो द्विगुसंज्ञः स्यात् ॥

## १४५. द्विगुरेकवचनम् ॥ २।४।१

द्विग्वर्थः समाहार एकवत्स्यात् ॥

### १४६. स नपुंसकम् ॥ २।४।१७

समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् । पञ्चानां गवां समाहारः पञ्चगवम् ।

### १४७. विशेषणं विशेष्येण बहुलम् ॥ २।१।५७

भेदकं भेद्येन समानाधिकरणेन बहुलं प्राग्वत् । नीलमुत्पलं नीलोत्पलम् । बहुलग्रहणात्क्वचिन्नित्यम् - कृष्णसर्पः । क्वचिन्न - रामो जामदग्न्यः ॥

### १४८. उपमानानि सामान्यवचनैः ॥ २।१।५५

घन इव श्यामो घनश्यामः । (*शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्*) । शाकप्रियः पार्थिवः शाकपार्थिवः । देवपूजको ब्राह्मणो देवब्राह्मणः ॥

### १४९. नञ् ॥ २।१।६

नञ् सुपा सह समस्यते ॥

### १५०. नलोपो नञः ॥ ६।३।७३

नञो नस्य लोप उत्तरपदे । न ब्राह्मणः अब्राह्मणः ॥

### १५१. तस्मान्नुडचि ॥ ६।३।७४

लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् । अनश्वः । नैकधेत्यादौ तु नशब्देन सह सुप्सुपेति समासः ॥

## ९५२. कुगतिप्रादयः ॥ २।२।१८

एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः ॥

## ९५३. ऊर्यादिच्विडाचश्च ॥ १।४।६१

ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । शुक्लीकृत्य । पटपटाकृत्य । सुपुरुषः ॥ ***(प्रादयो गताद्यर्थे प्रथमया)*** । प्रगत आचार्यः प्राचार्यः । (***अत्यादयः क्रान्ताद्यर्थे द्वितीयया***) । अतिक्रान्तो मालामिति विग्रहे - .

## ९५४. एकविभक्ति चापूर्वनिपाते ॥ १।२।४४

विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यान्न तु तस्य पूर्वनिपातः ॥

## ९५५. गोस्त्रियोरुपसर्जनस्य ॥ १।२।४८

उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् । अतिमालः । (***अवादयः क्रुष्टाद्यर्थे तृतीयया***) । अवक्रुष्टः कोकिलया - अवकोकिलः । (***पर्यादयो ग्लानाद्यर्थे***

***चतुर्थ्या***) । परिग्लानोऽध्ययनाय पर्यध्ययनः । (***निरादयः क्रान्ताद्यर्थे पञ्चम्या***) । निष्क्रान्तः कौशाम्ब्याः - निष्कौशाम्बिः ॥

## ९५६. तत्रोपपदं सप्तमीस्थम् ॥ ३।१।९२

सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात् ॥

## ९५७. उपपदमतिङ् ॥ २।२।१९

उपपदं सुबन्तं समर्थेन नित्यं समस्यते । अतिङन्तश्चायं समासः । कुम्भम् करोति कुम्भकारः । अतिङ् किम् ? मा भवान् भूत् । माङि लुङिति सप्तमीनिर्देशान्माङुपपदम् । (प.) गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः । व्याघ्री । अश्वक्रीती । कच्छपीत्यादि ॥

## ९५८. तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ॥ ५।४।८६

संख्याव्ययादेरङ्गुल्यन्तस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम् । निर्गतमङ्गुल्यो निरङ्गुलम् ॥

## ९५९. अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ॥ ५।४।८७

एभ्यो रात्रेरच् स्याच्चात्संख्याव्ययादेः । अहर्ग्रहणं द्वन्द्वार्थम् ॥

## ९६०. रात्राह्नाहाः पुंसि ॥ २।४।२९

एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव । अहश्च रात्रिश्चाहोरात्रः । सर्वरात्रः । संख्यातरात्रः । (*संख्यापूर्वं रात्रं क्लीबम्*) । द्विरात्रम् । त्रिरात्रम् ॥

## ९६१. राजाहः सखिभ्यष्टच् ॥ ५।४।९१

एतदन्तात्तत्पुरुषाट्टच् स्यात् । परमराजः ॥

## ९६२. आन्महतः समानाधिकरणजातीययोः ॥ ६।३।४६

महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे । महाराजः । प्रकारवचने जातीयर् । महाप्रकारो महाजातीयः ॥

## ९६३. द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ॥ ६।३।४७

आत्स्यात् । द्वौ च दश च द्वादश । अष्टाविंशतिः ॥

## ९६४. त्रेस्त्रयः ॥ ६।३।४८

त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् ॥

## ९६५. परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥ २।४।२६

एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । (*द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्य*ः) । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः ॥

## ९६६. प्राप्तापन्ने च द्वितीयया ॥ २।२।४

समस्येते । अकारश्चानयोरन्तादेशः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलं कुमार्यै - अलंकुमारिः । अत एव ज्ञापकात्समासः । निष्कौशाम्बिः ॥

### ९६७. अर्धर्चाः पुंसि च ॥ २।४।३१

अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः । अर्धर्चः । अर्धर्चम् । एवं ध्वजतीर्थशरीरमण्डपयूपदेहाङ्कुशपात्रसूत्रादयः । सामान्ये नपुंसकम् । मृदु पचति । प्रातः कमनीयम् ॥

*इति तत्पुरुषः ॥ ३ ॥*

## अथ बहुव्रीहिः

### ९६८. शेषो बहुव्रीहिः ॥ २।२।२३

अधिकारोऽयं प्राग्द्वन्द्वात् ॥

### ९६९. अनेकमन्यपदार्थे ॥ २।२।२४

अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः ॥

### ९७०. सप्तमीविशेषणे बहुव्रीहौ ॥ २।२।३५

सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात् । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः ॥

## ९७१. हलन्तात्सप्तम्याः संज्ञायाम् ॥ ६।३।९

हलन्ताददन्ताच्च सप्तम्या अलुक् । कण्ठेकालः । प्राप्तमुदकं यं स प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीताम्बरो हरिः । वीरपुरुषको ग्रामः । (*प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः*) । प्रपतितपर्णः, प्रपर्णः । (*नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः*) अविद्यमानपुत्रः, अपुत्रः ॥

## ९७२. स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ॥ ६।३।३४

उक्तपुंस्कादनूङ् ऊङोऽभावोऽस्यामिति बहुव्रीहिः । निपातनात्पञ्चम्या अलुक् षष्ठ्याश्च लुक् । तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः । गोस्त्रियोरिति ह्रस्वः । चित्रगुः । रूपवद्भार्यः । अनूङ् किम् ? वामोरूभार्यः ॥ पूरण्यां तु - .

## ९७३. अप्पूरणीप्रमाण्योः ॥ ५।४।११६

पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहे रप्स्यात् । कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणी पञ्चमा रात्रयः । स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः । अप्रियादिषु किम् ? कल्याणीप्रिय इत्यादि ॥

## ९७४. बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ॥ ५।४।११३

स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् । दीर्घसक्थः । जलजाक्षी । स्वाङ्गात्किम् ? दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः । अक्ष्णोऽदर्शनादिति वक्ष्यमाणोऽच् ॥

## ९७५. द्वित्रिभ्यां ष मूर्ध्नः ॥ ५।४।११५

आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः । त्रिमूर्धः ॥

## ९७६. अन्तर्बहिर्भ्यां च लोम्नः ॥ ५।४।११७

आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ । अन्तर्लोमः । बहिर्लोमः ॥

## ९७७. पादस्य लोपोऽहस्त्यादिभ्यः ॥ ५।४।१३८

हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ । व्याघ्रस्येव पादावस्य व्याघ्रपात् । अहस्त्यादिभ्यः किम् ? हस्तिपादः । कुसूलपादः ॥

**९७८. संख्यासुपूर्वस्य ॥ ५।४।१४०**

पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ। द्विपात्। सुपात्॥

**९७९. उद्विभ्यां काकुदस्य ॥ ५।४।१४८**

लोपः स्यात्। उत्काकुत्। विकाकुत्॥

**९८०. पूर्णाद्विभाषा ॥ ५।४।१४९**

पूर्णकाकुत्। पूर्णकाकुदः॥

**९८१. सुहृद्दुर्हृदौ मित्रामित्रयोः ॥ ५।४।१५०**

सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते। सुहृन्मित्रम्। दुर्हृदमित्रः॥

**९८२. उरः प्रभृतिभ्यः कप् ॥ ५।४।१५१**

**९८३. सोऽपदादौ ॥ ८।३।३८**

पाशकल्पककाम्येषु विसर्गस्य सः॥

**९८४. कस्कादिषु च ॥ ८।३।४८**

एष्विण उत्तरस्य विसर्गस्य षोऽन्यस्य तु सः। इति सः। व्यूढोरस्कः॥

**९८५. इणः षः ॥ ८।३।३९**

इण उत्तरस्य विसर्गस्य षः पाशकल्पककाम्येषु परेषु। प्रियसर्पिष्कः॥

### ९८६. निष्ठा ॥ २।२।३६

निष्ठान्तं बहुव्रीहौ पूर्वं स्यात्। युक्तयोगः ॥

### ९८७. शेषाद्विभाषा ॥ ५।४।१५४

अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा। महायशस्कः, महायशाः ॥

*इति बहुव्रीहिः ॥ ४ ॥*

## अथ द्वन्द्वः

### ९८८. चार्थे द्वन्द्वः ॥ २।२।२९

अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः । समुच्चयान्वाचयेत रेतरयोगसमाहाराश्चार्थाः । तत्र "ईश्वरं गुरुं च भजस्व" इति परस्परनिरपेक्षस्यानेक स्यैकस्मिन्नन्वयः समुच्चयः । "भिक्षामट गां चानय" इत्यन्यतरस्यानुषङ्गिकत्वेन अन्वयोऽन्वाचयः । अनयोरसामर्थ्यात्समासो न । "धवखदिरौ छिन्धि" इति मिलितानामन्वय इतरेतरयोगः । "संज्ञापरिभाषम्" इति समूहः समाहारः ॥

### ९८९. राजदन्तादिषु परम् ॥ २।२।३१

एषु पूर्वप्रयोगार्हं परं स्यात् । दन्तानां राजानो राजदन्ताः । (*धर्मादिष्वनियमः*) । अर्थधर्मौ । धर्मार्थावित्यादि ॥

**९९०. द्वन्द्वे घि ॥ २।२।३२**

द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिश्च हरश्च हरिहरौ ॥

**९९१. अजाद्यदन्तम् ॥ २।२।३३**

द्वन्द्वे पूर्वं स्यात् । ईशकृष्णौ ॥

**९९२. अल्पाच्तरम् ॥ २।२।३४**

शिवकेशवौ ॥

**९९३. पिता मात्रा ॥ १।२।७०**

मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ, मातापितरौ वा ॥

**९९४. द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥ २।४।२**

एषां द्वन्द्व एकवत् । पाणिपादम् । मार्दङ्गिकवैणविकम् । रथिकाश्वारोहम् ॥

**९९५. द्वन्द्वाच्चुदषहान्तात्समाहारे ॥ ५।४।१०६**

चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे। वाक् च त्वक् च वाक्त्वचम्। त्वक्स्रजम्। शमीदृषदम्। वाक्त्विषम्। छत्रोपानहम्। समाहारे किम्? प्रावृट्शरदौ॥

*इति द्वन्द्वः॥५॥*

# अथ समासान्ताः

## ९९६. ऋक्पूरब्धूःपथामानक्षे॥५।४।७४

अ अनक्षे इतिच्छेदः। ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवोऽक्षे या धूस्तदन्तस्य तु न। अर्धर्चः। विष्णुपुरम्। विमलापं सरः। राजधुरा। अक्षे तु अक्षधूः। दृढधूरक्षः। सखिपथः। रम्यपथो देशः॥

## ९९७. अक्ष्णोऽदर्शनात्॥५।४।७६

अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः। "गवामक्षीव गवाक्षः" ॥

## ९९८. उपसर्गादध्वनः॥५।४।८५

प्रगतोऽध्वानं प्राध्वो रथः॥

## ९९९. न पूजनात् ॥ ५।४।६९

पूजनार्थात्परेभ्यः समासान्ता न स्युः । सुराजा । अतिराजा ॥

*इति समासान्ताः ॥*

# अथ तद्धिताः,

तत्रादौ साधारणप्रत्ययाः

## १०००. समर्थानां प्रथमाद्वा ॥ ४।१।८२

इदं पदत्रयमधिक्रियते प्राग्दिश इति यावत् ॥

## १००१. अश्वपत्यादिभ्यश्च ॥ ४।१।८४

एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु । अश्वपतेरपत्यादि आश्वपतम् । गाणपतम् ॥

## १००२. दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ ७।२।११७

दित्यादिभ्यः पत्युततरपदाच्च प्राग्दीव्यतियेष्वर्थेषु ण्यः स्यात् । अणोऽपवादः । दितेरपत्यं दैत्यः । अदितेरादित्यस्य वा ॥

## १००३. हलो यमां यमि लोपः ॥ ४।१।८५

हलः परस्य यमो लोपः स्याद् वा यमि । इति यलोपः । आदित्यः । प्राजापत्यः । (**देवाद्यञञौ**) । दैव्यम्/ दैवम् । (**बहिषष्टिलोपो यञ्च**) । बाह्यः (**ईकक्च**) ॥

## १००४. किति च ॥ ७।२।११८

किति तद्धिते चाचामादेरचो वृद्धिः स्यात् । वाहीकः । (**गोरजादिप्रसङ्गे यत्**) । गोरपत्यादि गव्यम् ॥

## १००५. उत्सादिभ्योऽञ् ॥ ४।१।८६

औत्सः ॥

*इत्यपत्यादिविकारान्तार्थ साधारणप्रत्ययाः ॥ १ ॥*

# अथापत्याधिकारः

## १००६. स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ॥ ४।१।८७

धान्यानां भवन इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः । स्त्रैणः । पैंस्नः ॥

## १००७. तस्यापत्यम् ॥ ४।१।९२

षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः ॥

**१००८. ओर्गुणः ॥ ६।४।१४६**

उवर्णान्तस्य भस्य गुणस्तद्धिते। उपगोरपत्यमौपगवः। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पैंस्नः ॥

**१००९. अपत्यं पौत्रप्रभृति गोत्रम् ॥ ४।१।१६२**

अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ॥

**१०१०. एको गोत्रे ॥ ४।१।९३**

गोत्रे एक एवापत्यप्रत्ययः स्यात्। उपगोर्गोत्रापत्यमौपगवः ॥

**१०११. गर्गादिभ्यो यञ् ॥ ४।१।१०५**

गोत्रापत्ये। गर्गस्य गोत्रापत्यं गार्ग्यः। वात्स्यः ॥

**१०१२. यञञोश्च ॥ २।४।६४**

गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम्। गर्गाः। वत्साः ॥

**१०१३. जीवति तु वंश्ये युवा ॥ ४।१।१६३**

वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यात् ॥

## १०१४. गोत्राद्यून्यस्त्रियाम् ॥ ४।१।९४

यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्, स्त्रियां तु न युवसंज्ञा ॥

## १०१५. यञिञोश्च ॥ ४।१।१०१

गोत्रे यौ यञिञौ तदन्तात्फक् स्यात् ॥

## १०१६. आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ॥ ७।१।२

प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय् एते स्युः/ गर्गस्य युवापत्यं गार्ग्यायणः । दाक्षायणः ॥

## १०१७. अत इञ् ॥ ४।१।९५

अपत्येऽर्थे । दाक्षिः ॥

## १०१८. बाह्वादिभ्यश्च ॥ ४।१।९६

बाहविः । औडुलोमिः । *(लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः)* । उडुलोमाः । आकृतिगणोऽयम् ॥

## १०१९. अनृष्यानन्तर्ये बिदादिभ्योऽञ् ॥ ४।१।१०४

एभ्योऽञ् गोत्रे। ये त्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे। बिदस्य गोत्रं बैदः। बैदौ। बिदाः। पुत्रस्यापत्यं पौत्रः। पौत्रौ। पौत्राः। एवं दौहित्रादयः॥

## १०२०. शिवादिभ्योऽण्॥ ४।१।११२

अपत्ये। शैवः। गाङ्गः॥

## १०२१. ऋष्यन्धकवृष्णिकुरुभ्यश्च॥ ४।१।११४

ऋषिभ्यः - वासिष्ठः। वैश्वामित्रः। अन्धकेभ्यः - श्वाफल्कः। वृष्णिभ्यः - वासुदेवः। कुरुभ्यः - नाकुलः। साहदेवः॥

## १०२२. मातुरुत्संख्यासंभद्रपूर्वायाः॥ ४।१।११५

संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण् प्रत्ययश्च। द्वैमातुरः। षाण्मातुरः। सांमातुरः। भाद्रमातुरः॥

## १०२३. स्त्रीभ्यो ढक्॥ ४।१।१२०

स्त्रीप्रत्ययान्तेभ्यो ढक्। वैनतेयः॥

## १०२४. कन्यायाः कनीन च॥ ४।१।११६

चादण्। कानीनो व्यासः कर्णश्च॥

## १०२५. राजश्वशुराद्यत्॥ ४।१।१३७

*(राज्ञो जातावेवेति वाच्यम्)*॥

## १०२६. ये चाभावकर्मणोः ॥ ६।४।१६८

यादौ तद्धिते परेऽन् प्रकृत्या स्यान्न तु भावकर्मणोः । राजन्यः । जातावेवेति किम् ? - .

## १०२७. अन् ॥ ६।४।१६७

अन् प्रकृत्या स्यादणि परे । राजनः । श्वशुर्यः ॥

## १०२८. क्षत्राद् घः ॥ ४।१।१३८

क्षत्त्रियः । जातावित्येव/ क्षात्त्रिरन्यत्र ॥

## १०२९. रेवत्यादिभ्यष्ठक् ॥ ४।१।१४६

## १०३०. ठस्येकः ॥ ७।३।५०

अङ्गात्परस्य ठस्येकादेशः स्यात् । रैवतिकः ॥

## १०३१. जनपदशब्दात्क्षत्त्रियादञ् ॥ ४।१।१६८

जनपदक्षत्त्रियवाचकाच्छब्दादञ् स्यादपत्ये । पाञ्चालः । (*क्षत्त्रियसमान शब्दाज्जनपदात्तस्य राजन्यपत्यवत्*) । पञ्चालानां राजा पाञ्चालः । (*पूरोरण् वक्तव्यः*) । पौरवः । (***पाण्डोर्ड्यण्***) । पाण्ड्यः ॥

## १०३२. कुरुनादिभ्यो ण्यः ॥ ४।१।१७२

कौरव्यः । नैषध्यः ॥

**१०३३. ते तद्राजाः ॥ ४।१।१७४**

अञादयस्तद्राजसंज्ञाः स्युः ॥

**१०३४. तद्राजस्य बहुषु तेनैवास्त्रियाम् ॥ २।४।६२**

बहुष्वर्थेषु तद्राजस्य लुक् तदर्थकृते बहुत्वे न तु स्त्रियाम् । इक्ष्वाकवः । पञ्चालाः इत्यादि ॥

**१०३५. कम्बोजाल्लुक् ॥ ४।१।१७५**

अस्मात्तद्राजस्य लुक् । कम्बोजः । कम्बोजौ । (***कम्बोजादिभ्य इति वक्तव्यम्***) । चोलः । शकः । केरलः । यवनः ॥

*इत्यपत्याधिकारः ॥ २ ॥*

# अथ रक्ताद्यर्थकाः

**१०३६. तेन रक्तं रागात् ॥ ४।२।१**

अण् स्यात् । रज्यतेऽनेनेति रागः । काषायेण रक्तं वस्त्रं काषायम् ॥

**१०३७. नक्षत्रेण युक्तः कालः ॥ ४।२।३**

अण् स्यात् । (*तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्*) । पुष्येण युक्तं पौषमहः ॥

## १०३८. लुबविशेषे ॥ ४।२।४

पूर्वेण विहितस्य लुप् स्यात् षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते । अद्य पुष्यः ॥

## १०३९. दृष्टं साम ॥ ४।२।७

तेनेत्येव । वसिष्ठेन दृष्टं वासिष्ठं साम ॥

## १०४०. वामदेवाड्ड्यड्ड्यौ ॥ ४।२।९

वामदेवेन दृष्टं साम वामदेव्यम् ॥

## १०४१. परिवृतो रथः ॥ ४।२।१०

अस्मिन्नर्थेऽण् प्रत्ययो भवति । वस्त्रेण परिवृतो वास्त्रो रथः ॥

## १०४२. तत्रोद्धृतममत्रेभ्यः ॥ ४।२।१४

शरावे उद्धृतः शाराव ओदनः ॥

## १०४३. संस्कृतं भक्षाः ॥ ४।२।१६

सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः । भ्राष्ट्रेषु संस्कृता भ्राष्ट्रा यवाः ॥

## १०४४. सास्य देवता ॥ ४।२।२४

इन्द्रो देवतास्येति ऐन्द्रं हविः । पाशुपतम् । बार्हस्पत्यम् ॥

**१०४५. शुक्राद्घन् ॥ ४।२।२६**

शुक्रियम् ॥

**१०४६. सोमाट्ट्यण् ॥ ४।२।३०**

सौम्यम् ॥

**१०४७. वाय्वृतुपित्रुषसो यत् ॥ ४।२।३१**

वायव्यम् । ऋतव्यम् ॥

**१०४८. रीङ् ऋतः ॥ ७।४।२७**

अकृद्यकारे असार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः । यस्येति च । पित्र्यम् । उषस्यम् ॥

**१०४९. पितृव्यमातुलमातामहपितामहाः ॥ ४।२।३६**

एते निपात्यन्ते । पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः । मातुः पिता मातामहः । पितुः पिता पितामहः ॥

**१०५०. तस्य समूहः ॥ ४।२।३७**

काकानां समूहः काकम् ॥

**१०५१. भिक्षादिभ्योऽण् ॥ ६।४।१४६**

भिक्षाणां समूहो भैक्षम् । गर्भिणीनां समूहो गार्भिणम् । इह (***भस्याढे तद्धिते***) । इति पुंवद्भावे कृते - .

## १०५२. इनण्यनपत्ये ॥ ४।२।३७

अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात् । तेन नस्तद्धित इति टिलोपो न । युवतीनां समूहो यौवनम् ॥

## १०५३. ग्रामजनबन्धुभ्यस्तल् ॥ ४।२।४३

तलन्तं स्त्रियाम् । ग्रमता । जनता । बन्धुता । (***गजसहायाभ्यां चेति वक्तव्यम्***) । गजता । सहायता । (***अह्नः खः क्रतौ***) । अहीनः ॥

## १०५४. अचित्तहस्तिधेनोष्ठक् ॥ ४।२।४७

## १०५५. इसुसुक्तान्तात्कः ॥ ७।३।५१

इस् उस् उक्तान्तात्परस्य ठस्य कः । साक्तुकम् । हास्तिकम् । धैनुकम् ॥

## १०५६. तदधीते तद्वेद ॥ ४।२।५९

## १०५७. न य्वाभ्याम् पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ॥ ७।३।३

पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किंतु ताभ्यां पूर्वौ क्रमादैजावागमौ स्तः/ व्याकरणमधीते वेद वा वैयाकरणः ॥

**१०५८. क्रमादिभ्यो वुन् ॥ ४।२।६१**

क्रमकः । पदकः । शिक्षकः । मीमांसकः ॥

*इति रक्ताद्यर्थकाः ॥ ३ ॥*

# अथ चातुरर्थिकाः

**१०५९. तदस्मिन्नस्तीति देशे तन्नाम्नि ॥ ४।२।६७**

उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरो देशः ॥

**१०६०. तेन निर्वृत्तम् ॥ ४।२।६८**

कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी ॥

**१०६१. तस्य निवासः ॥ ४।२।६९**

शिबीनां निवासो देशः शैबः ॥

**१०६२. अदूरभवश्च ॥ ४।२।७०**

विदिशाया अदूरभवं नगरं वैदिशम् ॥

**१०६३. जनपदे लुप् ॥ ४।२।८१**

जनपदे वाच्ये चातुरर्थिकस्य लुप् ॥

**१०६४. लुपि युक्तवद्व्यक्तिवचने ॥ १।२।५१**

लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चालानां निवासो जनपदः पञ्चालाः/ कुरवः । अङ्गाः/ वङ्गाः । कलिङ्गाः ॥

**१०६५. वरणादिभ्यश्च ॥ ४।२।८२**

अजनपदार्थ आरम्भः । वरणानामदूरभवं नगरं वरणाः ॥

**१०६६. कुमुदनडवेतसेभ्यो ड्मतुप् ॥ ४।२।८७**

**१०६७. झयः ॥ ८।२।१०**

झयन्तान्मतोर्मस्य वः । कुमुद्वान् । नड्वान् ॥

**१०६८. मादुपधायाश्च मतोर्वोऽयवादिभ्यः ॥ ८।२।९**

मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः । वेतस्वान् ॥

**१०६९. नडशादाड्ड्वलच् ॥ ४।२।८८**

नड्वलः । शाद्वलः ॥

**१०७०. शिखाया वलच् ॥ ४।२।८९**

शिखावलः ॥

*इति चातुरर्थिकाः ॥ ४ ॥*

# अथ शैषिकाः

## १०७१. शेषे ॥ ४।१।९२

अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः स्युः । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा दार्षदाः सक्तवः । चतुर्भिरुह्यं चातुरं शकटम् । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । "तस्य विकारः" इत्यतः प्राक् शेषाधिकारः ॥

## १०७२. राष्ट्रावारपाराद्घखौ ॥ ४।२।९३

आभ्यां क्रमाद् घखौ स्तः शेषे । राष्ट्रे जातादिः राष्ट्रियः/ अवारपारीणः/ ***(अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्)*** । अवारीणः/ पारीणः/ पारावारीणः/ इह प्रकृतिविशेषाद् घादयष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते तेषां जातादयोऽर्थविशेषाः समर्थ विभक्तयश्च वक्ष्यन्ते ॥

## १०७३. ग्रामाद्यखञौ ॥ ४।२।९४

ग्राम्यः । ग्रामीणः ॥

## १०७४. नद्यादिभ्यो ढक् ॥ ४।२।९७

नादेयम् । माहेयम् । वाराणसेयम् ॥

## १०७५. दक्षिणापश्चात्पुरसस्त्यक् ॥ ४।२।९८

दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ॥

## १०७६. द्युप्रागपागुदक्प्रतीचो यत् ॥ ४।२।१०१

दिव्यम् । प्राच्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् ॥

## १०७७. अव्ययात्त्यप् ॥ ४।२।१०४

(***अमेहक्वतसित्रेभ्य एव***) । अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । (***त्यब्नेर्ध्रुव इति वक्तव्यम्***) । नित्यः ॥

## १०७८. वृद्धिर्यस्याचामादिस्तद्वृद्धम् ॥ १।१।७३

यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात् ॥

## १०७९. त्यदादीनि च ॥ १।१।७४

वृद्धसंज्ञानि स्युः ॥

## १०८०. वृद्धाच्छः ॥ ४।२।११४

शालीयः । मालीयः । तदीयः । (***वा नामधेयस्य वृद्धसंज्ञा वक्तव्या***) । देवदत्तीयः, दैवदत्तः ॥

## १०८१. गहादिभ्यश्च ॥ ४।२।१३८

गहीयः ॥

## १०८२. युष्मदस्मदोरन्यतरस्यां खञ् च ॥ ४।३।१

चाच्छः । पक्षेऽण् । युवयोर्युष्माकं युष्मदीयः, अस्मदीयः ॥

## १०८३. तस्मिन्नणि च युष्माकास्माकौ ॥ ४।३।२

युष्मदस्मदोरेतावादेशौ स्तः खञ्यणि च । यौष्माकीणः । आस्माकीनः । यौष्माकः । आस्माकः ॥

## १०८४. तवकममकावेकवचने ॥ ४।३।३

एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञि अणि च । तावकीनः । तावकः । मामकीनः । मामकः । छे तु - .

## १०८५. प्रत्ययोत्तरपदयोश्च ॥ ७।२।९८

मपर्यन्तयोरेतयोरेकार्थवाचिनोस्त्वमौ स्तः प्रत्यये उत्तरपदे च परतः । त्वदीयः । मदीयः । त्वत्पुत्रः । मत्पुत्रः ॥

## १०८६. मध्यान्मः ॥ ४।३।८

मध्यमः ॥

## १०८७. कालाट्ठञ् ॥ ४।३।११

कालवाचिभ्यष्ठञ् स्यात् । कालिकम् । मासिकम् । सांवत्सरिकम् । *(अव्ययानां भमात्रे टिलोपः)* । सायम्प्रातिकः । पौनः पुनिकः ॥

## १०८८. प्रावृष एण्यः ॥ ४।३।१७

प्रावृषेण्यः ॥

## १०८९. सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥ ४।३।२३

सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च । सायन्तनम् । चिरन्तनम् । प्राह्णे प्रगे अनयोरेदन्तत्वं निपात्यते । प्राह्णेतनम् । प्रगेतनम् । दोषातनम् ॥

## १०९०. तत्र जातः ॥ ४।३।२५

सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः । स्रुघ्ने जातः स्रौघ्नः । उत्से जात औत्सः । राष्ट्रे जातो राष्ट्रियः । अवारपारे जातः अवारपारीणः, इत्यादि//

## १०९१. प्रावृषष्ठप् ॥ ४।३।२६

एण्यापवादः । प्रावृषिकः ॥

## १०९२. प्रायभवः ॥ ४।३।३९

तत्रेत्येव । स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः ॥

## १०९३. सम्भूते ॥ ४।३।४१

स्रुघ्ने संभवति स्रौघ्नः ॥

## १०९४. कोशाड्ढञ् ॥ ४।३।४२

कौशेयम् वस्त्रम् ॥

## १०९५. तत्र भवः ॥ ४।३।५३

स्रुग्घ्ने भवः स्रौग्घ्नः । औत्सः । राष्ट्रियः ॥

## १०९६. दिगादिभ्यो यत् ॥ ४।३।५४

दिश्यम् । वर्ग्यम् ॥

## १०९७. शरीरावयवाच्च ॥ ४।३।५५

दन्त्यम् । कण्ठ्यम् । (*अध्यात्मादेष्ठञिष्यते*) अध्यात्मं भवमाध्यात्मिकम् ॥

## १०९८. अनुशतिकादीनां च ॥ ७।३।२०

एषामुभयपदवृद्धिर्ञिति णिति किति च/ आधिदैविकम्/ आधिभौतिकम्/ ऐहलौकिकम्/ पारलोकिकम्/ आकृतिगणोऽयम् ॥

## १०९९. जिह्वामूलाङ्गुलेश्छः ॥ ४।३।६२

जिह्वामूलीयम् । अङ्गुलीयम् ॥

## ११००. वर्गान्ताच्च ॥ ४।३।६३

कवर्गीयम् ॥

**११०१. तत आगतः ॥ ४।३।७४**

स्रुग्घ्नादागतः स्रौग्घ्नः ॥

**११०२. ठगायस्थानेभ्यः ॥ ४।३।७५**

शुल्कशालाया आगतः शौल्कशालिकः ॥

**११०३. विद्यायोनिसंबन्धेभ्यो वुञ् ॥ ४।३।७७**

औपाध्यायकः । पैतामहकः ॥

**११०४. हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ॥ ४।३।८१**

समादागतं समरूप्यम् । पक्षे - गहादित्वाच्छः । समीयम् । विषमीयम् । देवदत्तरूप्यम् । दैवदत्तम् ॥

**११०५. मयट् च ॥ ४।३।८२**

सममयम् । देवदत्तमयम् ॥

**११०६. प्रभवति ॥ ४।३।८३**

हिमवतः प्रभवति हैमवती गङ्गा ॥

**११०७. तद्गच्छति पथिदूतयोः ॥ ४।३।८५**

स्रुग्घ्नं गच्छति स्रौग्घ्नः पन्था दूतो वा ॥

**११०८. अभिनिष्क्रामति द्वारम् ॥ ४।३।८६**

स्रुग्घ्नमभिनिष्क्रामति स्रौग्घ्नं कान्यकुब्जद्वारम् ॥

 

**११०९. अधिकृत्य कृते ग्रन्थे ॥ ४।३।८७**

शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः ॥

**१११०. सोऽस्य निवासः ॥ ४।३।८९**

स्रुघ्नो निवासोऽस्य स्रौघ्नः ॥

**११११. तेन प्रोक्तम् ॥ ४।३।१०१**

पाणिनिना प्रोक्तं पाणिनीयम् ॥

**१११२. तस्येदम् ॥ ४।३।१२०**

उपगोरिदम् औपगवम् ॥

*इति शैषिकाः ॥ ५ ॥*

# अथ विकारार्थकाः

**१११३. तस्य विकारः ॥ ४।३।१३४**

*(अश्मनो विकारे टिलोपो वक्तव्यः)* । अश्मनो विकारः आश्मः । भास्मनः । मार्त्तिकः ॥

**१११४. अवयवे च प्राण्योषधिवृक्षेभ्यः ॥ ४।३।१३५**

चाद्विकारे। मयूरस्यावयवो विकारो वा मायूरः। मौर्वं काण्डं भस्म वा। पैप्पलम्॥

## ११९५. मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः॥ ४।३।१४३

प्रकृतिमात्रान्मयड्वा स्यात् विकारावयवयोः/ अश्ममयम्, आश्मनम्/ अभक्ष्येत्यादि किम्? मौद्गः सूपः/ कार्पासमाच्छादनम्॥

## ११९६. नित्यं वृद्धशरादिभ्यः॥ ४।३।१४४

आम्रमयम्। शरमयम्॥

## ११९७. गोश्च पुरीषे॥ ४।३।१४५

गोः पुरीषं गोमयम्॥

## ११९८. गोपयसोर्यत्॥ ४।३।१६०

गव्यम्। पयस्यम्॥

*इति विकारार्थाः। (प्राग्दीव्यतीयाः)॥ ६॥*

# अथ ठगधिकारः

## ११९९. प्राग्वहतेष्ठक्॥ ४।४।१

तद्वहतीत्यतः प्राक् ठगधिक्रियते ॥

**११२०. तेन दीव्यति खनति जयति जितम् ॥ ४।४।२**

अक्षैर्दीव्यति खनति जयति जितो वा आक्षिकः ॥

**११२१. संस्कृतम् ॥ ४।४।३**

दध्ना संस्कृतम् दाधिकम् । मारीचिकम् ॥

**११२२. तरति ॥ ४।४।५**

तेनेत्येव । उडुपेन तरति औडुपिकः ॥

**११२३. चरति ॥ ४।४।८**

तृतीयान्ताद्गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात् । हस्तिना चरति हास्तिकः । दध्ना चरति दाधिकः ॥

**११२४. संसृष्टे ॥ ४।४।२२**

दध्ना संसृष्टं दाधिकम् ॥

**११२५. उञ्छति ॥ ४।४।३२**

बदराण्युञ्छति बादरिकः ॥

**११२६. रक्षति ॥ ४।४।३३**

समाजं रक्षति सामाजिकः ॥

**११२७. शब्ददर्दुरं करोति ॥ ४।४।३४**

 

शब्दं करोति शाब्दिकः । दर्दुरं करोति दार्दुरिकः ॥

**११२८. धर्मं चरति ॥ ४।४।४१**

धार्मिकः (*अधर्माच्चेति वक्तव्यम्*) । आधर्मिकः ॥

**११२९. शिल्पम् ॥ ४।४।५५**

मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः ॥

**११३०. प्रहरणम् ॥ ४।४।५७**

तदस्येत्येव । असिः प्रहरणमस्य आसिकः । धानुष्कः ॥

**११३१. शीलम् ॥ ४।४।६१**

अपूपभक्षणं शीलमस्य आपूपिकः ॥

**११३२. निकटे वसति ॥ ४।४।७३**

नैकटिको भिक्षुकः ॥

*इति ठगधिकारः । (प्राग्वहतीयाः) ॥ ७ ॥*

## अथ यदधिकारः

**११३३. प्राग्घिताद्यत् ॥ ४।४।७५**

तस्मै हितमित्यतः प्राग् यदधिक्रियते ॥

**११३४. तद्वहति रथयुगप्रासङ्गम् ॥ ४।४।७६**

रथं वहति रथ्यः । युग्यः । प्रासङ्ग्यः ॥

**११३५. धुरो यड्ढकौ ॥ ४।४।७७**

हलि चेति दीर्घे प्राप्ते - .

**११३६. न भकुर्छुराम् ॥ ८।२।७९**

भस्य कुर्छुरोश्चोपधाया इको दीर्घो न स्यात् । धुर्यः । धौरेयः ॥

**११३७. नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु ॥ ४।४।९१**

नावा तार्यं नाव्यं जलम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेन आनाम्यं मूल्यम् । मूलेन समो मूल्यः । सीतया समितं सीत्यं क्षेत्रम् । तुलया संमितम् तुल्यम् ॥

**११३८. तत्र साधुः ॥ ४।४।९८**

अग्रे साधुः - अग्र्यः । सामसु साधुः सामन्यः । ये चाभावकर्मणोरिति प्रकृति भावः । कर्मण्यः । शरण्यः ॥

**११३९. सभाया यः ॥ ४।४।१०५**

सभ्यः ॥

 

*इति यतोऽवधिः । (प्राग्घितीयाः) ॥ ८ ॥*

# अथ छयतोरधिकारः

## ११४०. प्राक् क्रीताच्छः ॥ ५।१।१

तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते ॥

## ११४१. उगवादिभ्यो यत् ॥ ५।१।२

प्राक् क्रीतादित्येव । उवर्णान्ताद्गवादिभ्यश्च यत् स्यात् । छस्यापवादः । शङ्कवे हितं शङ्कव्यं दारु । गव्यम् । (***नाभि नभं च***) । नभ्योऽक्षः । नभ्यमञ्जनम् ॥

## ११४२. तस्मै हितम् ॥ ५।१।५

वत्सेभ्यो हितो वत्सीयो गोधुक् ॥

## ११४३. शरीरावयवाद्यत् ॥ ५।१।६

दन्त्यम् । कण्ठ्यम् । नस्यम् ॥

## ११४४. आत्मन्विश्वजनभोगोत्तरपदात्खः ॥ ५।१।९

## ११४५. आत्माध्वानौ खे ॥ ६।४।१६९

एतौ खे प्रकृत्या स्तः । आत्मने हितम् आत्मनीनम् । विश्वजनीनम् । मातृभोगीणः ॥

*इति छयतोरवधिः । (प्राक्क्रीतीयाः) ॥ १ ॥*

# अथ ठञधिकारः

**११४६. प्राग्वतेष्ठञ् ॥ ५।१।१८**

तेन तुल्यमिति वतिं वक्ष्यति, ततः प्राक् ठञधिक्रियते ॥

**११४७. तेन क्रीतम् ॥ ५।१।३७**

सप्तत्या क्रीतं साप्ततिकम् । प्रास्थिकम् ॥

**११४८. सर्वभूमिपृथिवीभ्यामणञौ ॥ ५।१।४१**

**११४९. तस्येश्वरः ॥ ५।१।४२**

सर्वभूमिपृथिवीभ्यामणञौ स्तः । अनुशतिकादीनां च । सर्वभूमेरीश्वरः सार्वभौमः । पार्थिवः ॥

**११५०. पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ॥ ५।१।५९**

एते रूढिशब्दा निपात्यन्ते ॥

**११५१. तदर्हति ॥ ५।१।६३**

लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञादयः स्युः । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः ॥

**११५२. दण्डादिभ्यो यत् ॥ ५।१।६६**

एभ्यो यत् स्यात् । दण्डमर्हति दण्ड्यः । अर्घ्यः । वध्यः ॥

**११५३. तेन निर्वृत्तम् ॥ ५।१।७९**

अह्ना निर्वृत्तम् आह्निकम् ॥

*इति ठञोऽवधिः । (प्राग्वतीयाः) ॥ १० ॥*

# अथ त्वतलोरधिकारः

**११५४. तेन तुल्यं क्रिया चेद्वतिः ॥ ५।१।११५**

ब्राह्मणेन तुल्यं ब्राह्मणवत् अधीते । क्रिया चेदिति किम् ? गुणतुल्ये मा भूत् । पुत्रेण तुल्यः स्थूलः ॥

**११५५. तत्र तस्येव ॥ ५।१।११६**

मथुरायामिव मथुरावत् स्रुघ्ने प्रकारः । चैत्रस्येव चैत्रवन्मैत्रस्य गावः ॥

## ११५६. तस्य भावस्त्वतलौ ॥ ५।१।११९

प्रकृतिजन्यबोधे प्रकारो भावः । गोर्भावो गोत्वम् । गोता । त्वान्तं क्लीबम् ॥

## ११५७. आ च त्वात् ॥ ५।१।१२०

ब्रह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते । अपवादैः सह समावेशार्थमिदम् । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रिया भावः - स्त्रैणम् । स्त्रीत्वम् । स्त्रीता । पौस्नम् । पुंस्त्वम् । पुंस्ता ॥

## ११५८. पृथ्वादिभ्य इमनिज्वा ॥ ५।१।१२२

वावचनमणादिसमावेशार्थम् ॥

## ११५९. र ऋतो हलादेर्लघोः ॥ ६।४।१६१

हलादेर्लघोर्ऋकारस्य रः स्यादिष्ठेयस्सु परतः । पृथुमृदुभृशकृशदृढपरिवृढा नामेव रत्वम् ॥

## ११६०. टेः ॥ ६।४।१५५

भस्य टेर्लोप इष्ठेमेयस्सु । पृथोर्भावः प्रथिमा - .

## ११६१. इगन्ताच्च लघुपूर्वात् ॥ ५।१।१३१

इगन्ताल्लघुपूर्वात् प्रातिपदिकाद्भावेऽण् प्रत्ययः । पार्थवम् । म्रदिमा, मार्दवम् ॥

**११६२. वर्णदृढादिभ्यः ष्यञ्च ॥ ५।१।१२३**

चादिमनिच्। शौक्ल्यम्। शुक्लिमा। दार्ढ्यम्। द्रढिमा॥

**११६३. गुणवचनब्राह्मणादिभ्यः कर्मणि च ॥ ५।१।१२४**

चाद्भावे। जडस्य भावः कर्म वा जाड्यम्। मूढस्य भावः कर्म वा मौढ्यम्। ब्राह्मण्यम्। आकृतिगणोऽयम्॥

**११६४. सख्युर्यः ॥ ५।१।१२६**

सख्युर्भावः कर्म वा सख्यम्॥

**११६५. कपिज्ञात्योर्ढक् ॥ ५।१।१२७**

कापेयम्। ज्ञातेयम्।

**११६६. पत्यन्तपुरोहितादिभ्यो यक् ॥ ५।१।१२८**

सैनापत्यम्। पौरोहित्यम्॥

*इति त्वतलोरधिकारः ॥ ११ ॥*

# अथ भवनाद्यर्थकाः

**११६७. धान्यानां भवने क्षेत्रे खञ् ॥ ५।२।१**

भवत्यस्मिन्निति भवनम्। मुद्गानां भवनं क्षेत्रं मौद्गीनम्॥

## ११६८. व्रीहिशाल्योर्ढक् ॥ ५।२।२

व्रैहेयम् । शालेयम् ॥

## ११६९. हैयङ्गवीनं संज्ञायाम् ॥ ५।२।२३

ह्योगोदोहशब्दस्य हियङ्गुरादेशः विकारार्थे खञ्च निपात्यते । दुह्यत इति दोहः क्षीरम् । ह्योगोदोहस्य विकारः - हैयङ्गवीनं नवनीतम् ॥

## ११७०. तदस्य संजातं तारकादिभ्य इतच् ॥ ५।२।३६

तारकाः संजाता अस्य तारकितं नभः । पण्डितः । आकृतिगणोऽयम् ॥

## ११७१. प्रमाणे द्वयसज्दघ्नञ्मात्रचः ॥ ५।२।३७

तदस्येत्यनुवर्तते । ऊरू प्रमाणमस्य - ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रम् ॥

## ११७२. यत्तदेतेभ्यः परिमाणे वतुप् ॥ ५।२।३९

यत्परिमाणमस्य यावान् । तावान् । एतावान् ॥

## ११७३. किमिदंभ्यां वो घः ॥ ५।२।४०

आभ्यां वतुप् स्याद् वकारस्य घश्च ॥

## ११७४. इदंकिमोरीश्की ॥ ६।३।९०

दृग्दृशवतुषु इदम ईश् किमः किः । कियान् । इयान् ॥

**११७५. संख्याया अवयवे तयप् ॥ ५।२।३९**

पञ्च अवयवा अस्य पञ्चतयम् ॥

**११७६. द्वित्रिभ्यां तयस्यायज्वा ॥ ५।२।४३**

द्वयम् । द्वितयम् । त्रयम् । त्रितयम् ॥

**११७७. उभादुदात्तो नित्यम् ॥ ५।२।४४**

उभशब्दात्तयपोऽयच् स्यात् स चाद्युदात्तः । उभयम् ॥

**११७८. तस्य पूरणे डट् ॥ ५।२।४८**

एकादशानां पूरणः एकादशः ॥

**११७९. नान्तादसंख्यादेर्मट् ॥ ५।२।४९**

डटो मडागमः । पञ्चानां पूरणः पञ्चमः । नान्तात्किम् ? .

**११८०. ति विंशतेर्डिति ॥ ६।४।१४२**

विंशतेर्भस्य तिशब्दस्य लोपो डिति परे । विंशः । असंख्यादेः किम् ? एकादशः ॥

**११८१. षट्कतिकतिपयचतुरां थुक् ॥ ५।२।५१**

 

एषां थुगागमः स्याड्डटि/ षण्णां षष्ठः/ कतिथः/ कतिपयशब्दस्यासंख्यात्वेऽप्यत एव ज्ञापकाड्डट्/ कतिपयथः/ चतुर्थः ॥

**११८२. द्वेस्तीयः ॥ ५।२।५४**

डटोऽपवादः । द्वयोः पूरणो द्वितीयः ॥

**११८३. त्रेः संप्रसारणं च ॥ ५।२।५५**

तृतीयः ॥

**११८४. श्रोत्रियंश्छन्दोऽधीते ॥ ५।२।८४**

श्रोत्रियः । वेत्यनुवृत्तेश्छान्दसः ॥

**११८५. पूर्वादिनिः ॥ ५।२।८६**

पूर्वं कृतमनेन पूर्वी ॥

**११८६. सपूर्वाच्च ॥ ५।२।८७**

कृतपूर्वी ॥

**११८७. इष्टादिभ्यश्च ॥ ५।२।८८**

इष्टमनेन इष्टी । अधीती ॥

*इति भवनाद्यर्थकाः ॥ १२ ॥*

# अथ मत्वर्थीयाः

## ११८८. तदस्यास्त्यस्मिन्निति मतुप् ॥ ५।२।९४

गावोऽस्यास्मिन्वा सन्ति गोमान् ॥

## ११८९. तसौ मत्वर्थे ॥ १।४।१९

तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे । गरुत्मान् । वसोः संप्रसारणं । विदुष्मान् । (***गुणवचनेभ्यो मतुपो लुगिष्टः***) । शुक्लो गुणोऽस्यास्तीति शुक्लः पटः । कृष्णः ॥

## ११९०. प्राणिस्थादातो लजन्यतरस्याम् ॥ ५।२।९६

चूडालः । चूडावान् । प्राणिस्थात्किम् ? शिखावान्दीपः । प्राण्यङ्गादेव । मेधावान् ॥

## ११९१. लोमादिपामादिपिच्छादिभ्यः शनेलचः ॥ ५।२।१००

लोमादिभ्यः शः । लोमशः । लोमवान् । रोमशः । रोमवान् । पामादिभ्यो नः । पामनः । **(ग. सू.) अङ्गात्कल्याणे** । अङ्गना । **(ग. सू.) लक्ष्म्या अच्च** । लक्ष्मणः । पिच्छादिभ्य इलच् । पिच्छिलः । पिच्छवान् ॥

## ११९२. दन्त उन्नत उरच् ॥ ५।२।१०६

उन्नता दन्ताः सन्त्यस्य दन्तुरः ॥

## ११९३. केशाद्वोऽन्यतरस्याम् ॥ ५।२।१०९

केशवः । केशी । केशिकः । केशवान् । (*अन्येभ्योऽपि दृश्यते*) । मणिवः । (*अर्णसो लोपश्च*) । अर्णवः ॥

## ११९४. अत इनिठनौ ॥ ५।२।११५

दण्डी । दण्डिकः ॥

## ११९५. व्रीह्यादिभ्यश्च ॥ ५।२।११६

व्रीही । व्रीहिकः ॥

## ११९६. अस्मायामेधास्रजो विनिः ॥ ५।२।१२१

यशस्वी । यशस्वान् । मायावी । मेधावी । स्रग्वी ॥

## ११९७. वचो ग्मिनिः ॥ ५।२।१२४

वाग्ग्मी ॥

## ११९८. अर्शआदिभ्योऽच् ॥ ५।२।१२७

अर्शोऽस्य विद्यते अर्शसः । आकृतिगणोऽयम् ॥

## ११९९. अहंशुभमोर्युस् ॥ ५।२।१४०

अहंयुः अहङ्कारवान् । शुभंयुस्तु शुभान्वितः ॥

*इति मत्वर्थीयाः ॥ १३ ॥*

# अथ प्राग्दिशीयाः

### १२००. प्राग्दिशो विभक्तिः ॥ ५।३।१

दिक्छब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः ॥

### १२०१. किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ॥ ५।३।२

किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते ॥

### १२०२. पञ्चम्यास्तसिल् ॥ ५।३।७

पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा स्यात् ॥

### १२०३. कु तिहोः ॥ ७।२।१०४

किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः । कुतः, कस्मात् ॥

### १२०४. इदम इश् ॥ ५।३।२

प्राग्दिशीये परे । इतः ॥

### १२०५. अन् ॥ ६।४।१६७

एतदः प्राग्दिशीये । अनेकाल्त्वात्सर्वादेशः । अतः । अमुतः । यतः । ततः । बहुतः । द्व्यादेस्तु द्वाभ्याम् ॥

## १२०६. पर्यभिभ्यां च ॥ ५।३।९

आभ्यां तसिल् स्यात् । परितः । सर्वत इत्यर्थः । अभितः । उभयत इत्यर्थः ॥

## १२०७. सप्तम्यास्त्रल् ॥ ५।३।१०

कुत्र । यत्र । तत्र । बहुत्र ॥

## १२०८. इदमो हः ॥ ५।३।११

त्रलोऽपवादः । इह ॥

## १२०९. किमोऽत् ॥ ५।३।१२

वाग्रहणमपकृष्यते । सप्तम्यन्तात्किमोऽद्वा स्यात् पक्षे त्रल् ॥

## १२१०. क्वाति ॥ ७।२।१०५

किमः क्वादेशः स्यादति । क्व । कुत्र ॥

## १२११. इतराभ्योऽपि दृश्यन्ते ॥ ५।३।१४

पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते । दृशिग्रहणाद्भवदादियोग एव । स भवान् । ततो भवान् । तत्र भवान् ।

तम्भवन्तम् । ततो भवन्तम् । तत्र भवन्तम् । एवं दीर्घायुः, देवानाम्प्रियः, आयुष्मान् ॥

**१२१२. सर्वैकान्यकिंयत्तदः काले दा ॥ ५।३।१५**

सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात् ॥

**१२१३. सर्वस्य सोऽन्यतरस्यां दि ॥ ५।३।६**

दादौ प्राग्दिशीये सर्वस्य सो वा स्यात् । सर्वस्मिन् काले सदा सर्वदा । अन्यदा । कदा । यदा । तदा । काले किम् ? सर्वत्र देशे ॥

**१२१४. इदमो र्हिल् ॥ ५।३।१६**

सप्तम्यन्तात् काल इत्येव ॥

**१२१५. एतेतौ रथोः ॥ ५।३।४**

इदम्शब्दस्य एत इत् इत्यादेशौ स्तौ रेफादौ थकारादौ च प्राग्दिशीये परे/ अस्मिन् काले एतर्हि/ काले किम्? इह देशे ॥

**१२१६. अनद्यतने र्हिलन्यतरस्याम् ॥ ५।३।२१**

कर्हि, कदा । यर्हि, यदा । तर्हि, तदा ॥

**१२१७. एतदः ॥ ५।३।५**

एत इत् एतौ स्तौ रेफादौ थादौ च प्राग्दिशीये । एतस्मिन् काले एतर्हि ॥

### १२१८. प्रकारवचने थाल् ॥ ५।३।२३

प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात् स्वार्थे । तेन प्रकारेण तथा । यथा ॥

### १२१९. इदमस्थमुः ॥ ५।३।२४

थालोऽपवादः । (***एतदोऽपि वाच्यः***) । अनेन एतेन वा प्रकारेण इत्थम् ॥

### १२२०. किमश्च ॥ ५।३।२५

केन प्रकारेण कथम् ॥

*इति प्राग्दिशीयाः ॥ १४ ॥*

## अथ प्रागिवीयाः

### १२२१. अतिशायने तमबिष्ठनौ ॥ ५।३।५५

अतिशयविशिष्टार्थवृत्तेः स्वार्थ एतौ स्तः । अयमेषामतिशयेनाढ्यः आढ्यतमः । लघुतमः, लघिष्ठः ॥

### १२२२. तिङश्च ॥ ५।३।५६

तिङन्तादतिशये द्योत्ये तमप् स्यात् ॥

## १२२३. तरप्तमपौ घः ॥ १।१।२२

एतौ घसंज्ञौ स्तः ॥

## १२२४. किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ॥ ५।४।११

किम एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे । किन्तमाम् । प्राह्णेतमाम् । पचतितमाम् । उच्चैस्तमाम् । द्रव्यप्रकर्षे तु उच्चैस्तमस्तरुः ॥

## १२२५. द्विवचनविभज्योपपदे तरबीयसुनौ ॥ ५।३।५७

द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । पूर्वयोरपवादः । अयमनयोरतिशयेन लघुः लघुतरो लघीयान् । उदीच्याः प्राच्येभ्यः पटुतराः पटीयांसः ॥

## १२२६. प्रशस्यस्य श्रः ॥ ५।३।६०

अस्य श्रादेशः स्यादजाद्योः परतः ॥

## १२२७. प्रकृत्यैकाच् ॥ ६।४।१६३

इष्ठादिष्वेकाच् प्रकृत्या स्यात् । श्रेष्ठः, श्रेयान् ॥

## १२२८. ज्य च ॥ ५।३।६१

प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः । ज्येष्ठः ॥

## १२२९. ज्यादादीयसः ॥ ६।४।१६०

आदेः परस्य। ज्यायान्॥

## १२३०. बहोर्लोपो भू च बहोः॥ ६।४।१५८

बहोः परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः। भूमा। भूयान्॥

## १२३१. इष्ठस्य यिट् च॥ ६।४।१५९

बहोः परस्य इष्ठस्य लोपः स्याद् यिडागमश्च। भूयिष्ठः॥

## १२३२. विन्मतोर्लुक्॥ ५।३।६५

विनो मतुपश्च लुक् स्यादिष्ठेयसोः। अतिशयेन स्रग्वी स्रजिष्ठः। स्रजीयान्। अतिशयेन त्वग्वान् त्वचिष्ठः। त्वचीयान्॥

## १२३३. ईषदसमाप्तौ कल्पब्देश्यदेशीयरः॥ ५।३।६७

ईषदूनो विद्वान् विद्वत्कल्पः। विद्वद्देश्यः। विद्वद्देशीयः। पचतिकल्पम्॥

## १२३४. विभाषा सुपो बहुच् पुरस्तात्तु॥ ५।३।६८

ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात्स च प्रागेव न तु परतः। ईषदूनः पटुर्बहुपटुः। पटुकल्पः। सुपः किम्? जयति कल्पम्॥

## १२३५. प्रगिवात्कः॥ ५।३।७०

इवे प्रतिकृतावित्यतः प्राक्काधिकारः॥

## १२३६. अव्ययसर्वनाम्नामकच् प्राक् टेः ॥ ५।३।७१

कापवादः । तिङश्चेत्यनुवर्तते ॥

## १२३७. अज्ञाते ॥ ५।३।७३

कस्यायमश्वोऽश्वकः/ उच्चकैः/ नीचकैः/ सर्वके । (*ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र सुबन्तस्य*)/ युष्मकाभिः । युवकयोः । त्वयका ॥

## १२३८. कुत्सिते ॥ ५।३।७४

कुत्सितोऽश्वोऽश्वकः ॥

## १२३९. किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् ॥ ५।३।९२

अनयोः कतरो वैष्णवः । यतरः । ततरः ॥

## १२४०. वा बहूनां जातिपरिप्रश्ने डतमच् ॥ ५।३।९३

जातिपरिप्रश्न इति प्रत्याख्यातमाकरे । बहूनां मध्ये एकस्य निर्धारणे डतमज्वा स्यात् । कतमो भवतां कठः । यतमः । ततमः । वाग्रहणमकजर्थम् । यकः । सकः ॥

*इति प्रागिवीयाः ॥ १५ ॥*

# अथ स्वार्थिकाः

## १२४१. इवे प्रतिकृतौ ॥ ५।३।९६

कन् स्यात् । अश्व इव प्रतिकृतिरश्वकः । (***सर्वप्रातिपदिकेभ्यः स्वार्थे कन्***) । अश्वकः ॥

## १२४२. तत्प्रकृतवचने मयट् ॥ ५।४।२१

प्राचुर्येण प्रस्तुतं प्रकृतम्, तस्य वचनं प्रतिपादनम् । भावे अधिकरणे वा ल्युट् । आद्ये प्रकृतमन्नमन्नमयम् । अपूपमयम् । द्वितीये तु अन्नमयो यज्ञः । अपूपमयं पर्व ॥

## १२४३. प्रज्ञादिभ्यश्च ॥ ५।४।३८

अण् स्यात् । प्रज्ञ एव प्राज्ञः । प्राज्ञी स्त्री । दैवतः । बान्धवः ॥

## १२४४. बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥ ५।४।४२

बहूनि ददाति बहुशः । अल्पशः । (***आद्यादिभ्यस्तसेरुपसंख्यानम्***) । आदौ आदितः । मध्यतः । अन्ततः । पृष्ठतः । पार्श्वतः । आकृतिगणोऽयम् । स्वरेण, स्वरतः । वर्णतः ॥

## १२४५. कृभ्वस्तियोगे संपद्यकर्तरि च्विः ॥ ५।४।५०

*(अभूततद्भाव इति वक्तव्यम्)*/ विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात् स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे//

## १२४६. अस्य च्वौ ॥ ७।३।३२

अवर्णस्य ईत्स्यात् च्वौ । वेर्लोपे च्व्यन्तत्वादव्ययत्वम् । अकृष्णः कृष्णः संपद्यते तं करोति कृष्णीकरोति । ब्रह्मीभवति । गङ्गीस्यात् । *(अव्ययस्य च्वावीत्वं नेति वाच्यम्)* । दोषाभूतमहः । दिवाभूता रात्रिः ॥

## १२४७. विभाषा साति कार्त्स्न्ये ॥ ५।४।५२

च्विविषये सातिर्वा स्यात्साकल्ये ॥

## १२४८. सात्पदाद्योः ॥ ८।३।१११

सस्य षत्वं न स्यात् । कृत्स्नं शस्त्रमग्निः संपद्यतेऽग्निसाद्भवति । दधि सिञ्चति ॥

## १२४९. च्वौ च ॥ ७।४।२६

च्वौ परे पूर्वस्य दीर्घः स्यात् । अग्नीभवति ॥

 

## १२५०. अव्यक्तानुकरणाद्व्यजवरार्धादनितौ डाच् ॥ ५।४।५७

द्व्यजेवावरं न्यूनं न तु ततो न्यूनमनेकाजिति यावत् । तादृशमर्धं यस्य तस्माड्डाच् स्यात् कृभ्वस्तिभिर्योगे / ***(डाचि विवक्षिते द्वे बहुलम्)*** । इति डाचि विवक्षिते द्वित्वम् । ***(नित्यमाम्रेडिते डाचीति वक्तव्यम्)*** । डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात् । इति तकारपकारयोः पकारः । पटपटाकरोति । अव्यक्तानुकरणात्किम् ? ईषत्करोति । द्व्यजवरार्धात्किम् ? श्रत्करोति । अवरेति किम् ? खरटखरटाकरोति । अनितौ किम् ? पटिति करोति ॥

*इति स्वार्थिकाः ॥ १६ ॥*

*इति तद्धिताः ॥*

# अथ स्त्रीप्रत्ययाः

## १२५१. स्त्रियाम् ॥ ४।१।३

अधिकारोऽयम् । समर्थानामिति यावत् ॥

## १२५२. अजाद्यतष्टाप् ॥ ४।१।४

अजादीनामकारान्तस्य च वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये टाप् स्यात् । अजा । एडका । अश्वा । चटका । मूषिका । बाला । वत्सा । होडा । मन्दा । विलाता । इत्यादि ॥ मेधा । गङ्गा । सर्वा ॥

## १२५३. उगितश्च ॥ ४।१।६

उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप्स्यात् । भवती । भवन्ती । पचन्ती । दीव्यन्ती ॥

## १२५४. टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ॥ ४।१।१५

अनुपसर्दनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप्स्यात् । कुरुचरी । नदट् नदी । देवट् देवी । सौपर्णेयी । ऐन्द्री । औत्सी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । पञ्चतयी । आक्षिकी । लावणिकी । यादृशी । इत्वरी । (*नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्*) । स्त्रैणी । पैंस्नी । शाक्तीकी । याष्टीकी । आढ्यङ्करणी । तरुणी । तलुनी ॥

## १२५५. यञश्च ॥ ४।१।१६

यञन्तात् स्त्रियां ङीप्स्यात् । अकारलोपे कृते - .

## १२५६. हलस्तद्धितस्य ॥ ६।१।१५०

हलः परस्य तद्धितयकारस्योपधाभूतस्य सोप ईति परे । गार्गी ॥

## १२५७. प्राचां ष्फ तद्धितः ॥ ४।१।१७

यञन्तात् ष्फो वा स्यात्स च तद्धितः ॥

## १२५८. षिद्गौरादिभ्यश्च ॥ ४।१।४१

षिद्भ्यो गौरादिभ्यश्च स्त्रियां ङीष् स्यात् । गार्ग्यायणी । नर्तकी । गौरी । अनुडुही । अनड्वाही । आकृतिगणोऽयम् ॥

## १२५९. वयसि प्रथमे ॥ ४।१।२०

प्रथमवयोवाचिनोऽदन्तात् स्त्रियां ङीप्स्यात् । कुमारी ॥

## १२६०. द्विगोः ॥ ४।१।४१

अदन्ताद् द्विगोर्ङीप्स्यात् । त्रिलोकी । अजादित्वात्त्रिफला । त्र्यनीका सेना ॥

## १२६१. वर्णादनुदात्तात्तोपधात्तो नः ॥ ४।१।३९

वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप् तकारस्य नकारादेशश्च । एनी, एता । रोहिणी, रोहिता ॥

## १२६२. वोतो गुणवचनात् ॥ ४।१।४४

उदन्ताद् गुणवाचिनो वा ङीष् स्यात् । मृद्वी, मृदुः ॥

## १२६३. बह्वादिभ्यश्च ॥ ४।१।४५

एभ्यो वा ङीष् स्यात् । बह्वी, बहुः । (*कृदिकारादक्तिनः*)/ रात्री, रात्रिः । (***सर्वतोऽक्तिन्नर्थादित्येके***)/ शकटी । शकटिः ॥

## १२६४. पुंयोगादाख्यायाम् ॥ ४।१।४८

या पुमाख्या पुंयोगात् स्त्रियां वर्तते ततो ङीष् । गोपस्य स्त्री गोपी । (***पालकान्तान्न***) - .

## १२६५. प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ॥ ७।३।४४

प्रत्ययस्थात्कात्पूर्वस्याकारस्येकारः स्यादापि स आप्सुपः परो न चेत् । गोपालिका । अश्वपालिका । सर्विका । कारिका । अतः किम् ? नौका । प्रत्ययस्थात्किम् ? शक्नोतीति शका । असुपः किम् ? बहुपरिव्राजका नगरी । ***(सूर्याद्देवतायां चाब्वाच्यः)*** । सूर्यस्य स्त्री देवता सूर्या । देवतायां किम् ? (***सूर्यागस्त्ययोश्छे च ङ्यां च***) । यलोपः । सूरी - कुन्ती'मानुषीयम् ॥

## १२६६. इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलचार्याणामानुक् ॥ ४।१।४९

एषामानुगागमः स्यात् ङीष् च । इन्द्रस्य स्त्री - इन्द्राणी । वरुणानी । भवानी । शर्वाणी । रुद्राणी । मृडानी । (***हिमारण्ययोर्महत्त्वे***) । महद्धिमं हिमानी । महदरण्यमरण्यानी । (***यवाद्दोषे***) । दुष्टो यवो यवानी

। (***यवनाल्लिप्याम्***) । यवनानां लिपिर्यवनानी । (***मातुलोपाध्याययोरानुग्वा***) । मातुलानी, मातुली । उपाध्यायानी, उपाध्यायी । (***आचार्यादणत्वं च***) । आचार्यस्य स्त्री आचार्यानी । (***अर्यक्षत्रियाभ्यां वा स्वार्थे***), अर्याणी, अर्या । क्षत्रियाणी, क्षत्रिया ॥

## १२६७. क्रीतात्करणपूर्वात् ॥ ४।१।५०

क्रीतान्ताददन्तात् करणादेः स्त्रियां ङीष्स्यात् । वस्त्रक्रीती । क्वचिन्न । धनक्रीता ॥

## १२६८. स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ ४।१।५४

असंयोगोपधमुपसर्जनं यत् स्वाङ्गं तदन्तााददन्तान् ङीष्वा स्यात् । केशानतिक्रान्ता - अतिकेशी, अतिकेशा । चन्द्रमुखी चन्द्रमुखा । असंयोगोपधात्किम् ? सुगुल्फा । उपसर्जनात्किम् ? शिखा ॥

## १२६९. न क्रोडादिबह्वचः ॥ ४।१।५६

क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा । आकृतिगणोऽयम् । सुजघना ॥

## १२७०. नखमुखात्संज्ञायाम् ॥ ४।१।५८

न ङीष् ॥

## १२७१. पूर्वपदात्संज्ञायामगः ॥ ८।४।३

पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात् संज्ञायां न तु गकारव्यवधाने । शूर्पणखा । गौरमुखा । संज्ञायां किम् ? ताम्रमुखी कन्या ॥

## १२७२. जातेरस्त्रीविषयादयोपधात् ॥ ४।१।६३

जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् स्यात् । तटी । वृषली । कठी । बह्वृची । जातेः किम् ? मुण्डा । अस्त्रीविषयात्किम् ? बलाका । अयोपधात्किम् ? क्षत्रिया । (***योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः***) । हयी । गवयी । मुकयी । हलस्तद्धितस्येति यलोपः । मनुषी । (***मत्स्यस्य ङ्याम्***) । यलोपः । मत्सी ॥

## १२७३. इतो मनुष्यजातेः ॥ ४।१।६५

ङीष् । दाक्षी ॥

## १२७४. ऊङुतः ॥ ४।१।६६

उदन्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात् । कुरूः । अयोपधात्किम् ? अध्वर्युर्ब्राह्मणी ॥

## १२७५. पङ्गोश्च ॥ ४।१।६८

पङ्गूः । (***श्वशुरस्योकाराकारलोपश्च***) । श्वश्रूः ॥

## १२७६. ऊरूत्तरपदादौपम्ये ॥ ४।१।६९

उपमानवाची पूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात् । करभोरूः ॥

## १२७७. संहिताशफलक्षणवामादेश्च ॥ ४।१।७०

अनौपम्यार्थं सूत्रम् । संहितोरूः । शफोरूः । लक्षणोरूः । वामोरूः ॥

## १२७८. शार्ङ्गरवाद्यञो ङीन् ॥ ४।१।७३

शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात्/ शार्ङ्गरवी/ बैदी । ब्राह्मणी । (*नृनरयोर्वृद्धिश्च*) नारी ॥

## १२७९. यूनस्तिः ॥ ४।१।७७

युवञ्छब्दात् स्त्रियां तिः प्रत्ययः स्यात् । युवतिः ॥

*॥ लघुसिद्धान्तकौमुदी समाप्ता ॥*

# विषयसूची

